* श्रीः *

* ओंतत्सत् *

श्रीमद्भगवद्रामानुजमुनिसिद्धान्त-

धुरन्धरसर्वतन्त्रस्वतन्त्रश्रीमद्वेङ्कटेशदेशिकविरचिता

# दुर्जनमुखभङ्गचपेटिका

भागवताचार्य्यविहितटिप्पण्यनुगता


पुस्तक मिलने का पता —
श्रीवैष्णवधर्मप्रवर्द्धिनी पाठशाला
बड़ा स्थान — अयोध्या ।

मू० १)



श्रीमते रामानुजाय नमः

सर्वदेशदिशाकालेष्वव्याहतपराक्रमा ।
रामानुजार्यदिव्याज्ञा वर्द्धतामभिवर्द्धताम् ॥
रामानुजार्यदिव्याज्ञा प्रतिवासरमुज्ज्वला ।
दिगन्तव्यापिनी भूयात्सा हि लोकहितैषिणी ॥

---

Printed by Bishwambhar Nath Sharma Brajabasi
at "Shri Madangopal" Press,
Brindaban. U. P.

---

पुस्तक मिलनेका पता—
श्री१०८ महंतजी महाराज
बड़ी जगह
अयोध्या ।

# सम्मतिपत्रम् ।

## श्रीमते रामानुजाय नमः ।

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्त्तकाचार्याणां भव-भयामितप्त जनभागधेयभावितादिशेषावतारश्रीमत्परमहंसपरिव्राजकाचार्य-—श्रीमद्भगवद्रामानुजमुनिसिद्धान्तनिर्वहणधुरन्धराचार्याणां श्रीमदखिल-महीमण्डलालङ्कारमहीपालकिरीटकोटिघटितमणि-किरणपटलपाटलितपादपीठपर्यन्ताचार्याणां श्रीमन्निखिलहरिन्नितम्बिनीश्रवस्ताटकायमाना-मलधवलकीर्त्तिप्रकर्षाणां मायावादिम-दान्धकरीन्द्रदुर्मदकुम्भनिर्भेदनदक्षसत्तर्ककर्कशनखरशिखरके—-सरीन्द्राणां कर्मज्ञानभक्तिवैराग्यादिविधुराकिञ्चनजनार्थ—परम-पुरुषार्थलक्षणविलक्षणमोक्षभिक्षाप्रदाननिबद्धपरिकराणां निजमति-मयमन्दरमहीधरमथितसकलवाङ्मयमहोदधिसमाधिगततत्त्वहितपुरु-षार्थावबोधरत्नानां स्वशिष्यप्रवरकारिताखिलभारतभूपतिबुद्धिविभ्र-मद्श्रीवृन्दावनस्थभगवद्दिव्यालयानां श्रीमद्गोवर्द्धनपीठाधिष्ठितसर्व-तन्त्रस्वतन्त्र श्री १०८ मद्रङ्गदेशिकानामात्मजप्रवर श्रीश्री१०८निवा-सार्यतनूजरत्न–कन्दाडोपपदविभूषित-वाधूलश्रीश्री१०८ रङ्गाचार्य्याः सम्मन्वते निजपितामहविहितदुर्ज्जनमुखभङ्गचपेटिकाख्यग्रन्थस्य मुद्रणादिना पुनर्जीर्णोद्धरणं श्रीमदयोध्याबृहत्स्थानाधिपति-कारितं शिवाय भवतु वैष्णवानामिति ।

---

नमः सीतालक्ष्मणभरतशत्रुघ्नसमेताय हनुमत्संसेव्यमानचरण-नलिनयुगलाय दुर्वादलश्यामलाङ्गाय सर्वलोकाभिरामाय श्रीरा-माय नमो नमः ।

नमः श्रीमद्दशरथचक्रवर्त्तिहृदयारविन्दविकासिभास्कराय सर्व-लोकयशस्कराय श्रीमज्जननीनयनचकोरचन्द्राय श्रीसाकेताधिपूर्ण-चन्द्राय श्रीरामचन्द्राय नमो नमः ।

श्रीः ।

# धन्यवादः ।

श्रीमद्बोधायनादिमहर्षि-भक्तिसारादिदिव्यसूरि-नाथयामुनयतिवरादिपूर्वाचार्यपरिगृहीतश्रुत्यादिसिद्धविशिष्टाद्वैतसिद्धान्तनिष्ठरामानन्दीयवैष्णवप्रवरश्रीजानकीचरणकमलामिलिन्दायमानश्रीमद्रामप्रसादगुरुचरणपरम्पराप्राप्तश्रीगोपालप्रसादगुरुवर्यकृपादत्तश्रीकोदण्डपाणिपदपङ्कजञ्चञ्चरीकायमानश्रीमदयोध्याबृहत्स्थानाधिप(महन्त) श्रीमद्राममनोहरप्रसादशुभसमाह्वयमहानुभावेभ्यः। तदौदार्यगाम्भीर्यधैर्यसौलभ्यसौजन्यसौहार्दकारुण्यार्जव-विवेकादिगुणग्राहकमहाभागवतैर्वैष्णवैः कोटिशो धन्यवादाः प्रदीयन्ते । यैर्महामहिमशालिभिः परमविद्यानुरागिभिः स्वात्मनैव श्रीवैष्णवधर्मप्रवर्द्धिनीं पाठशालां स्थापयित्वा ब्राह्मणवैष्णवाः शास्त्राणि पाठ्यन्ते । श्रीविक्रमेणेव श्रीमदयोध्यापुरी-मध्यमारभ्य प्रान्तपर्यन्तं तत्तत्तीर्थस्थलनामोल्लेखयुतास्तत्तत्स्थलेषु पूर्णपरिचयाय यैः सुदृढं शिला निखन्यन्ते स्म । एवं विधा यथा किलानेके महोपकारास्तैर्विहितास्तथैव श्रीवैष्णवसिद्धान्तरहस्यरत्नाकराणां दुष्कृतीतरसकलजनविश्वसनीयानां श्रीरङ्गदेशिककृपाप्तसकलामुष्मिकवैभवानां श्रीबलरामस्वामिमहाभागानां कथनमात्रेण स्वीयद्रव्यव्ययेनैतद्ग्रन्थमुद्रापणपूर्वकप्रचारादिना पुनर्वैष्णवसिद्धान्तस्य महत्कैङ्कर्यं व्यधायीति पुनः सहर्षं कोटिशो धन्यवादान्दत्वा तेषां कृतज्ञो भवति—

विद्वद्वैष्णवपरिचरणोत्सुको

राम कोट निवासी—

पं० रामनारायणदासः ।

---

"यस्याऽमलं नृपसदस्सु यशोऽधुनाऽपि ।
गायन्त्यघघ्नमृषयो दिगिभेन्द्रपट्टम् ॥
तं नाकपालवसुपालकिरीटजुष्ट—
पादाम्बुजं रघुपतिं शरणं प्रपद्ये" ॥

श्रियै नमः ।

# भूमिका ।

सुविदितमेवैतत्तत्रभवतां निखिलपरावरतत्त्वयाथात्म्यप्रकाशवतां प्रमाणपरतन्त्रीकृतशेमुषीकाणामासेतुशीताचलं धरणीतलमलङ्कुर्वाणानां विपश्चिताम् । यद् "यतो वा इमानि भूतानि जायन्ते" "जन्माद्यस्य यतः" इत्यादिश्रुतिन्यायाधिगतं परं ब्रह्मैकमेवेति । तदेव च "विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम्" इत्यादिसात्विकसत्पुराणाद्युपबृंहणवचनबलाद्विष्णुवासुदेवनारायणभगवदादिशब्दवाच्यम् । अत्र चोत्तीर्णब्रह्मवादादीनां परदेवतापारमार्थ्यप्रकरणादिषु पूर्वाचार्यैरेव क्षपितत्वात् सर्वशरीरिणः श्रीविष्णोरेव पारतम्यं सिद्ध्यति । तदुपासकानां तच्चरणशरणवरणभाजां वैष्णवानामेव च तुर्यपुरुषार्थावाप्तिरिति सर्ववैदिकसिद्धान्तः । यथा च नान्योपासकानां मोक्षावाप्तिस्तथा पुराणादिषु तत्तत्प्रकरणादवगम्यते यथा हरिवंशे ( अ० ८४ ) श्रीकृष्णं प्रतिघण्टाकर्णवाक्यम्—

"आगतोऽहं महाशैलात् कैलासाद्भूतसेवितात् ।
अहं पिशाचवेषेण सम्विष्टः पापकर्मकृत् ॥

सततं दूषयन्विष्णुं घण्टामाबध्य कर्णयोः ।
मम न प्रविशेन्नाम विष्णोरिति विचिन्तयन् ॥

अहं कैलासनिलय-मासाद्य वृषभध्वजम् ।
आराध्य तं महादेव-मस्तुवं सततं शिवम् ॥

ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः ।
ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ ॥

मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः ।
मुक्तिदाता स सर्वेषां विष्णुरेव न संशयः ॥

तस्माद् गत्वा च बदरीं तत्राराध्य जनार्दनम् ।
मुक्तिं प्राप्नुहि गोविन्दा—न्नरनारायणाश्रमे ॥
इत्युक्तो देवदेवेन शूलिना ज्ञातवानहम् ।
तमेव परमं मत्वा गोविन्दं गरुडध्वजम् ॥
तस्मात्प्रार्थयमानः सन् मुक्तिदेशमगुज्झतः" इति ।

तथा दशमे ( अ० ५१ ) मुचुकुन्दं प्रति देववाक्यम्—

"वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ।
एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः" इति ।

वाराहे ( अ० ७२ ) अगस्त्यं प्रति रुद्रवाक्यम्—

"लिङ्गमूर्त्तिश्च मां देवा यजन्ते भोगकाङ्क्षिणः ।
सहस्रशीर्षकं देवं मनसा तु मुमुक्षवः"

तत्रैव ( अ० ११७ ) भूदेवीं प्रति वराहवचनम्—

"अन्यदेवेषु ये भक्ता मूढा वै पापचेतसः ।
मम मायाविमूढास्तु न प्रपद्यन्ति माधवि ! ॥
मान्तु ये वै प्रपद्यन्ते मोक्षकामा वसुन्धरे ! ।
तानहं भावसंशुद्धान् बुध्वा सम्विभजामि वै"

इत्यादितत्तत्सात्विकवचनसहस्रेभ्योऽवैष्णवानां मोक्षाऽनवाप्तिपूर्वकं वैष्णवानामेव मोक्षप्राप्त्यवगमाद्वैष्णवा एव मोक्षाधिकारिण इति सिद्धम् ।

ननु पुराणान्तरेष्वितो विपरीतार्थप्रतिपादनं दृश्यते तथाहि शिवपुराणे रुद्रसंहितायां प्रथमखण्डे सप्तमाध्यायमारभ्य दशमाध्यायान्तंमुक्तस्यार्थस्य स्थालीपुलाकन्यायेन पुराणान्तरप्रमेयावगमाय सङ्क्षेपः प्रदर्श्यते—तत्र सप्तमाध्याये—

"अथानन्दवने तस्मिञ्छिवयो रममाणयोः ।
इच्छेत्यभूत्सुरर्षे ! हि सृज्यः कोऽप्यपरः किल"

इतीच्छासमनन्तरमेकः पुमानाविरासीत्स च शम्भुं प्रणम्य स्वामिन् ! मे नामानि कुरु कर्म च वदेति जगाद । ततः शिवेन तस्य विष्णुरिति नाम कृत्वा तपः कुर्वित्याज्ञा दत्ता । ततः स बहुकालानन्तरं ध्यानमार्गेण तपसा सिद्धो जातः । तस्याङ्गेभ्यः शिवमायया जलधारा निःसृतास्तज्जलं ब्रह्मरूपमभूत्तस्मिन्

विष्णुः सुष्वाप। सुप्ते चास्मिन् शङ्करेच्छया तन्नाभौ पङ्कजं बभूव। तदैव शङ्करस्स्वदक्षिणाङ्गात्पूर्वं चतुर्मुखमुत्पाद्यानन्तरं विष्णुनाभिपङ्कजात्तमाविर्भावयामास। बहुकालं भ्रमता ब्रह्मणा शङ्करेच्छयोत्पन्नां मोहविध्वंसिनीं व्योमवाणीं श्रुत्वा स्वजनकं द्रष्टुं द्वादशाब्दं तपस्तप्तम्। ततो विष्णुदर्शनानन्तरं तयोरहं श्रेष्ठोऽहं श्रेष्ठ इत्यहमहमिकया विवादः समजनि। अभूच्च हरिणा सह विधेर्महीयान्सङ्गरः। तदा तयोर्विवादशमनार्थमाद्यन्तशून्यं ज्योतिर्मयं लिङ्गमाविरासीत्। तस्यान्तं द्रष्टुं विष्णुर्वराहरूपेणाऽधो विवेश। ब्रह्मोर्ध्वं हंसरूपेण। उभावप्यलब्धान्तौ विगतगर्वौ तत्रागत्य शिवं तुष्टुवतुः। ततो दिव्यवर्षशतान्ते करुणानिधिः शम्भुराविर्भूय तौ प्रत्युवाच—

श्रीशिव उवाच—

"भक्त्या च भवतोर्नूनं प्रीतोऽहं सुरसत्तमौ।
पश्यतं मां महादेवं भयं सर्वं विमुञ्चताम्॥
"अयं मे दक्षिणात्पार्श्वाद्ब्रह्मा लोकपितामहः।
वामपार्श्वाच्च विष्णुस्त्वं समुत्पन्नः परात्मनः"
"एतस्मात्कारणाद्ब्रह्मन्! करणीयमिदं त्वया।
सृष्टिकर्त्ता भव ब्रह्मन्! सृष्टेश्च पालको हरिः॥
मदीयश्च तथायोंऽशो लयकर्त्ता भविष्यति"
"भवन्तौ प्रकृतेर्जातौ नायं वै प्रकृतेः पुनः"
"ज्ञानविज्ञानसंयुक्तो लोकानां हितकारकः।
मुक्तिदोऽत्र भवानद्य भव लोके मदाज्ञया"
"विष्णो! सृष्टिकरं प्रीत्या पालयैनं पितामहम्।
सम्पूज्यस्त्रिषु लोकेषु भविष्यसि मदाज्ञया॥
तव सेव्यो विधेश्चाऽपि रुद्र एव भविष्यति।
शिवपूर्णावतारो हि त्रिजगल्लयकारकः"
"अन्यच्छृणु हरे! विष्णो! शासनं मम सुव्रत!।
सदा सर्वेषु लोकेषु मान्यः पूज्यो भविष्यसि॥
ब्रह्मणा निर्मिते लोके यदा दुःखं प्रजायते।
तदा त्वं सर्वदुःखानां नाशाय तत्परो भव"

"लोकेऽस्मिन्भुक्तिदो नृणां मुक्तिदश्च विशेषतः।
ध्येयः पूज्यश्च भक्तानां निग्रहानुग्रहौ कुरु"
"सर्वाध्यक्षश्च सर्वेषु भुक्तिमुक्तिप्रदायकः।
भव त्वं सर्वथा श्रेष्ठः सर्वकामप्रसाधकः॥
सर्वेषां प्राणरूपश्च भव त्वञ्च ममाज्ञया।
सङ्कटे भजनीयो हि स रुद्रो मत्तनुर्हरे!"

विष्णुरुवाच—

"शङ्कर! श्रूयतामेतत्कृपासिन्धो! जगत्पते!।
सर्वमेतत्करिष्यामि भवदाज्ञावशानुगः॥
मम ध्येयः सदा त्वञ्च भविष्यसि न चान्यथा।
भवतः सर्वसामर्थ्यं लब्धञ्चैव पुरा मया॥
क्षणमात्रमपि स्वामिन्! तव ध्यानं परं मम।
चेतसो दूरतो नैव सङ्गच्छतु कदाचन॥
मम भक्तश्च यः स्वामिन्! तव निन्दां करिष्यति।
तस्य वै निरये वासं प्रयच्छ नियतं ध्रुवम्॥
त्वद्भक्तो यो भवेत्स्वामिन्! मम प्रियतरो हि सः।
एवं वै यो विजानाति तस्य मुक्तिर्न दुर्लभा"

इति विष्णुस्तुतिं श्रुत्वा विष्णुब्रह्माणौ प्रति विविधान्धर्मानादिश्य भक्तवत्सलः शम्भुस्तत्रैवान्तरधीयतेति।

इयमेव कथात्रैव शिवपुराणे प्रथमायां विद्येश्वरसंहितायां सप्तमाध्याये किञ्चित्तारतम्येन वर्त्तते,

तथा तत्रैव कैलाससंहितायाम्— ( अ० १५ )

"सदाशिवसहस्रांशा-न्महेशस्य समुद्भवः"
"महेश्वरसहस्रांशा-द्रुद्रमूर्त्तिरजायत"
"रुद्रमूर्त्तेः सहस्रांशा-द्विष्णोरेवाभवज्जनिः" इति।

तथा पराशरोपपुराणे—

"अथातः सम्प्रवक्ष्यामि देवताधिक्यमादरात्" इत्यारभ्य—
"प्रजापतेरपि ब्रह्मा ब्रह्मणो विष्णुरास्तिकः।
विष्णोरपि हरस्तस्मान्मायी साक्षान्महेश्वरः।
ततोऽधिकतरः साक्षाच्छिवः साम्बः सनातनः"

इत्यन्तम् । ब्रह्मपुराणे च—

"अनेकजन्मसिद्धानां श्रौतस्मार्त्तानुवर्त्तिनाम् ।
हरः श्रेष्ठो हरेः साक्षादिति बुद्धिः प्रजायते ॥
महापापवतां नृणां हरिः श्रेष्ठो हरादिति ।
बुद्धिर्विजायते तेषां सदा संसार एव हि ॥
निर्विकल्पे परे तत्त्वे श्रद्धा येषां विजायते ।
अयत्नासिद्धा परमा मुक्तिस्तेषां न संशयः ॥
निर्विकल्पं परं तत्त्वं नाम साक्षाच्छिवः परः ।
सोऽयं साम्बस्त्रिनेत्रश्च चन्द्रार्द्धकृतशेखरः"

इत्यादीनि । अत्र च रुद्रमूर्त्तिसहस्रांशाद्विष्णुजननं शिवस्य सर्वस्मात्परत्वं बहुजन्मानुष्ठितश्रौतस्मार्त्तकर्मणां हरेर्हरस्य परत्वज्ञानजननं महापापिष्ठानां हराद्धरेः परत्वबुद्धिजननं तेषां सदामुक्त्यभावः शिवात्मकनिर्विकल्पपरतत्त्वे श्रद्धावतामनायासेन मुक्तिरित्यादयोऽर्थाः प्रतिपाद्यन्ते ।

एवमाग्नेयादिषु पुराणेष्वपि शिवस्यैव परत्वप्रतिपादनं दृश्यते । परमेतदेव महदाश्चर्यं यदेक एव भगवान् व्यासोऽष्टादशपुराणानां कर्त्ता परमाप्ततमश्च तेनैकत्र विष्णोः परत्वं ब्रह्मशिवादयः सर्वे ततो जातास्तदधीनस्थितिप्रवृत्तिकास्तस्यैवानुचरास्तस्माल्लब्धवरास्तत्प्रसादेन महत्त्वमवाप्ता इति निरूपितम् । अन्यत्र च शिव एव परं तत्त्वं ब्रह्मविष्णुप्रभृतयः प्रकृतेर्जाताः रुद्रः साक्षाच्छिवावतारोऽत एव न स प्राकृतः शिवकृपयैव विष्णोः पूज्यत्वं शिवाज्ञया च तस्य मुक्तिप्रदत्वं सर्वाध्यक्षत्वञ्च ब्रह्मविष्ण्वादयः सर्वे शिवस्य दासास्तत्प्रसादेनैव महत्त्वं प्राप्ता इत्यादि निरूपितम् । तथा चैकेनैव व्यासेन परस्परं विरुद्धवचनान्युदाहृत्य क्वचिद्विष्णोर्वैष्णवानां क्वचिच्छिवस्य शैवानाञ्च महत्त्वं प्रदर्श्य तेनैव शैववैष्णवविरोधस्याङ्कुरः समारोपित इति प्रतीयते । वस्तुतोऽपि परस्परविरुद्धवचनेषु केषां प्रामाण्यं केषान्नेति धीमतां परीक्षकाणामपि बुद्धौ भ्रमो जायते । ततोऽयं सर्वोऽपि दोषो व्यासस्यैवेति ।

अत्रोच्यते—

"नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किञ्चित्तदन्यथाजातं त्रेतायां द्वापरेऽखिलम् ॥
गौतमस्य ऋषेः शापा-ज्ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥
शरण्यं शरणं जग्मु-र्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान् भगवान्वेदा-नुज्जहार हरिः स्वयम् ॥
चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाऽप्यतः ।
यथा व्यासत्वमेकस्य कृष्णस्याऽन्ये विशेषणात् ॥
सविशेषणसूत्राणि ह्यपराणि विदो विदुः ।
मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः ॥
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ।
सूत्रेषु येषु सर्वेऽपि निर्णयाः समुदीरिताः ॥
शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णयः ।
एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः ॥
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ।
ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः"

इतिश्रीमन्मध्वभाष्योदाहृतस्कान्दवचनबलेन—

"कृष्णं द्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
कोऽन्यो हि भुवि मैत्रेय! महाभारतकृद्भवेत्"

इति विष्णुपुराण ( अं० अ० ४ ) वचनबलेन च भगवतो व्यासस्य ब्रह्मरुद्रादिषु ज्ञानसंस्थापकत्वनारायणावतारत्वप्रतिपादनात् ज्ञानप्रदानायावतीर्णस्य तस्य भ्रमजनकत्वं न जातु सम्भवतीति ।

तर्हि परस्परविरुद्धपुराणवचनानां का गतिरिति चेन्मीमांसेत्यवेहि। कथं मीमांसा क्रियते इति चेत्सावधानमनाः शृणु, प्रथमं तावत्पुराणानां कल्पभेदेन ब्रह्मणा प्रोक्तत्वात्कल्पानाञ्च तामसादिभेदेन चतुर्विधत्वात्पुराणानामपि चातुर्विध्यं बोध्यम्—यथोक्तं मात्स्ये ( अ० ४६ )—

"सङ्कीर्णास्तामसाश्चैव राजसाः सात्विकास्तथा।
कल्पाश्चतुर्विधाः प्रोक्ताः ब्रह्मणो दिवसात्यये॥
यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते॥
अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते।
राजसेषु च माहात्म्य-मधिकं ब्रह्मणो विदुः॥
सङ्कीर्णेषु सरस्वत्याः पितॄणां च निगद्यते।
सात्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः॥
तेष्वेव योगसंसिद्धा गमिष्यन्ति पराङ्गतिम्" इति।

तदिह सङ्कीर्णतामसादिकल्पोक्तेषु पुराणेषु सात्विकबुद्धिमता ब्रह्मणा सात्विककल्पोक्तानां सात्विकपुराणानामेव प्रामाण्यं नेतरेषाम्, अयथावद्ग्राहिविपरीतसर्वार्थग्राहिबुद्धिमता प्रोक्तत्वात्।

उक्तं च ( गी० अ० १८ ) भगवता सात्विकादिबुद्धिकार्यम् यथा—

"प्रवृत्तिञ्च निवृत्तिञ्च कार्याकार्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ! सात्विकी॥
यया धर्ममधर्मञ्च कार्यञ्चाकार्यमेव च।
अयथावत्प्रजानाति बुद्धिः सा पार्थ! राजसी॥
अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी" इति।

एवं पुराणानां तामसादिविभागप्रकरणे पाद्मे ( उ० अ० २३६ )
"मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च।
आग्नेयं च षडेतानि तामसानि निबोध मे"

इत्यादिना शिवलिङ्गादिपुराणानां तामसत्वकथनात् तामसेषु चाग्निशिवादितामसदेवतामाहात्म्यकथनस्य नियतत्वात् तामस-

त्वेन तामसबुद्धिमता ब्रह्मणा प्रोक्तत्वेन च तत्राधर्मस्यैव धर्मत्वेन निरूपणात् विपरीतसर्वार्थकत्वाच्चाऽप्रामाण्यम्। तथा च तत्रोक्ता ये धर्मास्तेऽधर्मा इति मन्तव्यम्। येचार्थास्ते सर्वे विपरीता एव ज्ञेयाः। "अधर्मं धर्ममिति या" "सर्वार्थान्विपरीतांश्च" इति तामसबुद्धिकार्यस्याऽभिहितत्वात्। सात्विकपुराणाविरुद्धांश एव राजसतामसपुराणेषु प्रमाणत्वेन स्वीकरणीयः। सर्वथा विरुद्धांशस्तु सात्त्विकैर्हेय एव। क्वचित्सात्त्विकेष्वपि पुराणेषु सङ्कीर्णांशो हेयः क्वचिच्च राजसतामसपुराणेष्वपि सात्विकांशः परमप्रमाणत्वेनोपादेयः सात्त्विकप्रमेयप्रतिपादकत्वात्। तामसप्रमेयप्रतिपादकत्वमेव हि तामसत्वम्। यथोक्तं नारदपञ्चरात्रे पारमेश्वरसंहितायां दशमपटले सनकं प्रति शाण्डिल्येन—

"ब्रह्मरुद्रमुखानान्तु विबुधानान्तथैव च॥
मातृणामपि दुर्गायाः स्वातन्त्र्येण तु यत्र वै॥ ३६३॥
मन्त्रध्यानं प्रमाणं च लक्षणं स्थापनं तथा॥
निर्दिष्टं तामसं नाम मुनिवाक्यं तु विद्धि तत्" ॥३६४॥

इति। भारते मोक्षधर्मे च—

"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः।
सात्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः॥

इत्यादिभगवत्कटाक्षेण सत्वगुणमूलमोक्षचिन्तनमुक्त्वा—

"पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः।
रजसा तमसा चास्य मानसं समभिप्लुतम्"

इति ब्रह्मरुद्रकटाक्षेण मनसो रजस्तमोमूलकालुष्यप्रापणोक्तेश्च ब्रह्मरुद्रोत्कर्षप्रतिपादकग्रन्थानां राजसत्वं तामसत्वञ्चोपपद्यते।

ननु,सत्त्वस्यैवोत्कृष्टत्वं न रजस्तमसोरित्यत्र किम्विनिगमकमिति चेन्न—

"सत्वं रजस्तमश्चेति देवासुरगुणान्विदुः।
सत्वं देवगुणं विद्या-दितरावासुरौ गुणौ"

इति (शां० अ० २१६) भारतोक्तप्रकारेण सत्त्वस्य देवगुणत्वेनोत्कृष्टत्वादितरयोरासुरगुणत्वेन तदसम्भवात्।

ननु दैवस्यैवोत्कृष्टत्वं नासुरस्येत्यत्रैव किं विनिगमकं

पुराणादिषु देवेभ्योऽसुराणामेव प्राबल्यदर्शनादिति चेत्सत्यम्, जनिकालीनभगवत्कटाक्षेण सत्त्वगुणवत्त्वाद्दैवगुणसम्पत्त्या पुरुषो दैवीं सम्पदमभिजातो भवति। जनिकालीनब्रह्मरुद्रकटाक्षेण रजस्तमोगुणवत्त्वादासुरगुणसम्पत्त्या पुरुष आसुरीं सम्पदमभिजातो भवति। तथा चोभयसम्पदोः कार्यं भगवतैव स्फुटतरं गीतम् ( अ० १६ ) "दैवी सम्पाद्विमोक्षाय निबन्धायासुरीमता" इति पूर्वार्द्धेन। तथा "मा शुचः सम्पदं दैवीमभिजातोऽसि भारत!" इत्युत्तरार्द्धेन दैवींसम्पदमभिजातस्य शोककरणमेव निषिद्धम्। तथा तत्रैव-

"प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते"

इत्यादिना तेषां लक्षणान्युक्त्वा--

"तानहं द्विषतः क्रूरान्संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम्"

इत्यासुरभावपर्यवसानस्य भगवतैव निन्दितत्वान्नोत्कृष्टत्वमिति। जनिकालिकभगवत्कटाक्षस्य मोक्षचिन्तनहेतुत्वाभिधानाद्देवतान्तरकटाक्षेण मनसो रजस्तमोव्याप्तत्वाभिधानाच्चासुरप्रकृतयो भगवन्तं न प्रपद्यन्त इत्यपि भगवतैव गीतं सप्तमाध्याये—

"न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः" इति।

तथा ते निजया रजस्तमःप्रकृत्या वशीकृता मोक्षेतरैर्ग्राम्यैस्तैस्तैः कामैर्हृतज्ञाना आसुरजनाः भगवत्तनुरूपा अन्यदेवताः प्रपद्यन्ते। ताभ्योऽल्पबुद्धीनां तेषां तुच्छानन्तवदेवफलं भवति। न तु साक्षान्मदाराधकानामिवानन्तमित्याह—

"कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया॥
यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते।

लभते च ततः कामान् मयैव विहितान् हि तान् ॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्” इति ।
अभिहितश्चायमेवार्थोऽवैकल्येन भागवते प्रथमे ( अ० २ श्लो० २७ )

“मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥
रजस्तमःप्रकृतयः समशीला भजन्ति वै ।
पितृभूतप्रजेशादीञ् श्रियैश्वर्यप्रजेप्सवः” इति ।

अत्राऽपि रजस्तमःस्वभावा आसुरजनाः स्वसमानशीला भूतेशादिदेवता ऐश्वर्य्यादीप्सवो भजन्ति । शिष्टाः सत्वप्रकृतयस्तु मुमुक्षवः सन्तो भूतपत्यादीन् हित्वा तेषामसूयामकुर्वन्त एव रामकृष्णादिरूपाः शान्ताः नारायणकला भजन्ति ।

तथाच सार्वत्रिकोऽयं विभागः ये सात्त्विका मुमुक्षवस्तेसर्वेशरीरिणं मोक्षप्रदं सत्वनिधिं श्रीविष्णुमेव भजन्ति । ये च रजस्तमःप्रकृतयस्ते चैश्वर्यादिकामाः परमपुरुषाङ्गभूतान् भूतपतिप्रभृतीन् भजन्तीति । यानि च पुराणेषु शिवोत्कर्षविष्णुनिकर्षप्रतिपादकानि वचनानि दृश्यन्ते तानि सर्वाणि प्रक्षिप्तानीति न शक्यते वक्तुं, तेषां प्रयोजनस्य विद्यमानत्वात् । यथा हि विष्णुपुराणतृतीयांशाष्टादशाध्याये पाद्मसृष्टिखण्डत्रयोदशाध्याये चासुराणां सम्मोहनाय तेषां वेदमार्गादपाकरणाय च निरयप्रापकस्याऽपि बौद्धस्यार्हतस्य च धर्मस्य श्रीविष्णोराज्ञानुसारेण तत्सृष्टमायामोहद्वारा “धर्मो विमुक्तेरर्होऽयं नैतस्मादपरः परः । अत्रैवावस्थिताः स्वर्गं मुक्तिं वापि गमिष्यथ” इत्युक्तरीत्या मुक्तिप्रदत्वेन प्रतिपादनं दृश्यते, तथा रजस्तमःप्रकृतीनामासुरीं सम्पदमभिजातानां देवतान्तरश्रद्धोत्पादनद्वारा तेषां मोहनाय पुराणेषु राजसतामसवचनानि सप्रयोजनानीति नास्ति क्वापि पुराणेषु भगवद्व्यासकृतं विरुद्धांशप्रतिपादनं तद्वचनानामप्रामाण्यं, वा, स्वाभिधित्सितार्थे तेषामबाधात् । “यत्परः शब्दः स शब्दार्थः” इति न्यायादिति । तस्मादुपक्रमाभिहिता तुरीयपुरुषार्थावाप्तिर्विष्णुभक्तानामेव, न देवतान्तरयजनशीलानामवैष्णवानामिति सार्वदिकं सकलशास्त्ररहस्यम् ।

अत एव भागवते ( ष० अ० १४ )—

"देवानां शुद्धसत्वाना-मृषीणाञ्चामलात्मनाम् ।
भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते"

इत्यादिना विष्णुभक्तेर्देवर्ष्यादिष्वपि दौर्लभ्यमुक्तम् । नारायणपरायणस्त्वतिदुर्लभ इत्यपि तत्रैवोच्यते । यथा—

"रजोभिः सह सङ्ख्याताः पार्थिवैरिह जन्तवः ।
तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ॥
प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम ! ।
मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिद्धयति ॥
मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने !"इति

अथ येषां नारायणपरायणानां मुक्तसिद्धकोटिष्वपि दौर्लभ्यमुक्तं तेषामेव कलियुगे द्रविडदेशे प्रादुर्भावं भविष्यतया निर्दिष्टवाञ्जनकं प्रति योगेश्वरः करभाजनः । भागवते ( ए० अ० ५ )—

"कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः"
इत्यारभ्य—
कृतादिषु नरा राजन् ! कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥
क्वचित्क्वचिन्महाराज ! द्रविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥
कावेरी च महापुण्या प्रतीची च महानदी ।
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर ! ॥
प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः"

अत्र च कृतादिष्वित्यादिपद्यानि द्रविडताम्रपर्ण्यादेर्यादिप्रसिद्धपदसान्निध्यादेतत्पद्यघटकनारायणपरायणपदस्य तत्तन्नदीतीरोद्भूतश्रीसम्प्रदायिवैष्णवेषु शक्तिं ग्राहयन्ति । तथा च महर्षिवचनप्रामाण्यादेतेषां कलियुगोद्भूतत्वमेव भूषणम् । एते नारायणपरायणाः श्रीवैष्णवा आदिशेषावतारभूतश्रीरामानुजमुनिप्रचारितपञ्चरात्रानुष्ठाननिष्ठत्वाद्रामानुजसम्प्रदायिन इति च व्यपादिश्यन्ते ।

उक्तश्च पञ्चरात्रविधिप्रचारश्चातुर्वर्ण्ये महाभारते सर्वज्ञेन भीष्मेनापि—( भी० अ० ६६ )

"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
अर्चनीयश्च सेव्यश्च पूजनीयश्च माधवः ॥ ३९ ॥
सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः ॥
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च" ॥ ४० ॥

अत्रापि द्वापरस्यान्ते कलियुगस्यादौ सङ्कर्षणेन गीतं सात्वतं पाञ्चरात्रिकं विधिमास्थाय कृततापादिपञ्चसंस्कारलक्षणैर्ब्राह्मणादिभिर्माधवोऽर्चनीयः सेव्यः पूजनीयश्चेति विधिश्रवणात् तथाऽनुष्ठानदर्शनाच्च श्रीसम्प्रदायसिद्धान्ते पूर्वोक्तभागवतवचनैस्सह भारतीयभीष्मवचनस्यैककण्ठ्यमभ्युपपन्नतरम् । तथा भविष्यकलिस्वरूपमुद्दिश्य श्रीहरिवंशभविष्यपर्वणि—

(*)"शुक्लदन्ता जिताक्षाश्च मुण्डाः काषायवाससः ।
शूद्रा धर्मं चरिष्यन्ति शाक्यबुद्धोपजीविनः"

---

(*) एवं हि हरिवंशभविष्यपर्वणि भविष्यत्कलिधर्मस्वरूपं पृष्टो भगवान् बादरायणो वेदबाह्य—बौद्धचार्वाकादिमतं प्रदर्श्य, पश्चाद्वेदवादच्छद्मच्छन्नं तृतीयाध्याये"शुक्लदन्ता"इत्यादिनानिर्दिष्टरूपकं मायावादि—मतमपि नास्तिकमतमित्याह—चतुर्थाध्याये श्लोकद्वयेन—नास्तिक्यपरमाश्चाऽपीति । अत्र च शाङ्करमतानुयायिन, एव दूष्यन्ते, न बौद्धादयस्तेषां स्वरूपस्य पूर्वं निरूपितत्वात्, युक्तश्चैतेषामेव नास्तिक्यपरमत्वं, वेदाभ्युपगमेनास्तिकवद्भासमानानामेषां नास्तिक्यमेव परमं प्रयोजनमतस्ते नास्तिक्यपरमाः । तथाहि—-ब्रह्मातिरेकिणः सर्वस्य जगतो मिथ्यात्वात्तन्नास्त्येव, अवशिष्टमेकं ब्रह्म तदप्यशेषविशेषैर्विधुरं निर्विशेषमित्येव वदन्ति । तथा च ब्रह्मास्तीत्युक्तौ ब्रह्मणोऽस्तित्वरूपविशेषाक्रान्तत्वापत्तिभिया तथा कथनासम्भवेनावशादेव पर्यवसाने नास्तिकत्वं समागतमिति परमं फलमेतेषां नास्तिक्यमिति सिद्धमेषामेव नास्तिक्यपरमत्वम् ।

धर्मविलोपकत्वञ्च, दैत्यमोहनप्रवृत्तवामदेवमतानुयायित्वात् । तदात्वमात्रश्रद्धेया इति—वेदवादच्छद्मच्छन्नत्वान्मन्द

"नास्तिक्यपरमाश्चापि केचिद्धर्मविलोपकाः।
भविष्यन्ति नरा मन्दा मूढाः पण्डितमानिनः॥
तदात्वमात्रश्रद्धेयाः शास्त्रज्ञानबहिष्कृताः।
दाम्भिकास्ते भविष्यन्ति वादशीलकुतूहलाः"

इतितृतीयचतुर्थाध्यायवचनैः प्रच्छन्नबौद्धानां मायावादिनां विस्तरेण स्वरूपं निरूप्य--तत्रैव

"तदा विलुलिते धर्मे जनाः शेषपुरस्कृताः।
शुभान्येवाचरिष्यन्ति दानसत्यसमन्विताः"

इत्यत्र मायादिविलुलितधर्मक कलिप्रकरणे शेषेण कलियुगस्यदौ अवतीर्णेन श्रीरामानुजाचार्यरूपेणादिशेषेण पुरस्कृतानां जनानां—शुभाचरणाभिधानात्, श्रीरामानुजाचार्यप्रवर्द्धित—श्रीसम्प्रदाय-सिद्धान्ते पूर्वोक्तभारतभागवतवचनैः सह हरिवंशवचनानामप्यैककण्ठ्यं सुगमम्। एवं श्रीनारदपञ्चरात्रबृहद्ब्रह्मसंहिताद्वितीय-पादसप्तमाध्यायेऽपि श्रीरङ्गमाहात्म्यवर्णनप्रकरणे—

"यत्र मे लोककल्याणकारिणी परमा कला।
द्विजरूपेण भविता या तु सङ्कर्षणाभिधा॥
द्वापरान्ते कलेरादौ पाषण्डप्रचुरे जने।
रामानुजेति भविता विष्णुधर्मप्रवर्त्तकः"

इत्यादिना द्वापरान्ते कलेरादौ जने जैनबौद्धप्रच्छन्नबौद्धा-दिपाषण्डप्रचुरे सति, श्रीरामानुजाचार्यरूपेणावतीर्णस्य श्रीसङ्कर्षणरूपादिशेषांशस्य लोककल्याणकारित्वाभिधानात्तत्प्रवर्द्धितसम्प्रदाये पूर्वोक्तभागवतादिवचनैस्सह निरुक्तपञ्चरात्रवचनानामैकक-ण्ठ्यात् श्रीसम्प्रदायस्य प्रशस्ततमत्वं सिद्ध्यति।

एवं श्रीसम्प्रदायिवैष्णवानां शास्त्रसिद्धं वैभवमसहमानाः

---

बुद्धिभिरिमेवैदिका इति तत्कालमात्रविश्वसनीयाः। वस्तु-तस्तु, शास्त्रज्ञानबहिष्कृताः—वास्तवशास्त्र——तात्पर्यविधुराः। दाम्भिकत्वादिकञ्च, परकृत—ग्रन्थचौर्यादिना, दूषितान्तःकरण-त्वेऽप्यात्मनः पूज्यत्वोपपादक——विश्वसनीयवेषादिना च स्पष्ट-मेवैतेषाम्। तथा वादशीलकुतूहलत्वं पराजयेऽप्यात्मनो मुधा जेतारो वयमिति कोलाहलादिना विशेषज्ञैः सुज्ञेयमेवेति।

केचन मायावादिनो न्यायश्रुतिशिखरसिद्धं विशिष्टाद्वैतवेदान्त-सिद्धान्तं दूषयन्तो बहून् ग्रन्थान् चक्रुस्तान्सर्वानपि श्रीसुदर्शनाचार्यश्रीमद्वेङ्कटनाथार्यादयो बहुभिर्दुर्वादिदमनक्षमसद्युक्तिमद्भिः श्रुतप्रकाशिका—सर्वार्थसिद्धि शतदूषणीप्रभृतिभिर्ग्रन्थैः खण्डयामासुस्तदारभ्य ते चण्डकिरणपुरतो बिभ्यन्त उलूका इवाऽद्यावधि-वेदान्तवादपराङ्मुखा आसन्। एवं स्वोद्योगं वितथं मत्वा बहवो व्युपारमन्कलहात्। तदनु केचन जघन्याः पाषण्डिनो गुरु-परम्परानुपपत्तिप्रदर्शनेन स्वोद्योगं सफलं मन्वानाः स्वेच्छया हीनकुले बृद्धिङ्गतानुत्पन्नानस्पृष्टसंसारगन्धान्नित्यमुक्तान् भगवच्च-क्रांद्यंशभूतान् भक्तिसारादीनुद्दिश्य 'श्रीवैष्णवमतप्रवर्त्तकाः शूद्र-भिल्लचाण्डालादिजातीया अभूवन्नि'ति निन्दापरान् ग्रन्थान् कृत्वा जजल्पुः।

अत्र केचित् "येऽस्मान्निन्दति तानेव निन्दामि न सतोऽप-रान्" इति प्रतिज्ञाय ये द्विजाः श्रीवैष्णवमतप्रवर्त्तकान्नीचानाहुस्ते स्वमतप्रवर्त्तकं शङ्कराचार्यमेव कथं न चाण्डालमभिदधते यतो-धर्मशास्त्रादिग्रन्थास्तं श्वपचादपि निषिद्धं चाण्डालं वदन्ति, तथाहि तदीयचरिते शङ्करदिग्विजये आनन्दगिरिः—

"ततः सर्वात्मको देवश्चिदम्बरपुराश्रितः।
आकाशलिङ्गनाम्ना तु विख्यातोऽभून्महीतले॥
तत्र विद्वन्महेन्द्रस्य कुले द्विजगुणाश्रिते।
जातः सर्वज्ञनाम्ना तु कश्चिद्द्विजकुलेश्वरः॥
कामाक्षी तु सती चाभूत्तस्य लक्षणलक्षिता।
चिदम्बरेश्वरं ध्यात्वा तावुभौ प्रापतुः सुताम्॥
सा कुमारी सदा ज्ञान-सक्ताऽभूज्ज्ञानतत्परा।
विशिष्टेति च नाम्ना तु प्रसिद्धाऽभून्महीतले॥
तामष्टमेऽब्दे विप्राय शान्तायाऽद्भुतकर्मणे।
प्रददौ विश्वजिन्नाम्ने सर्वज्ञोऽस्याः पिता स्वयम्॥
सा सदा पतिमद्वैतं ध्यात्वाऽऽकाशात्मकं शिवम्।
अस्याराधनमत्युग्र-माचचार विवेकिनी॥
तादृशीमपि सन्त्यक्त्वा ययौ विश्वजिदद्भुतम्।

अरण्यं तपसे कृत्वा मनो निश्चयतां गतम् ॥
तदा प्रभृति सा नारी चिदम्बरमहेश्वरम् ।
पूजयामास पूजाभि-र्ध्यानैरात्मगतैः सदा ॥
महोग्रतेजसा पुष्टा विशिष्टाऽभूद् दृढाम्बिका ।
सर्वैः सम्पूजिता नित्यं पित्रादिभिरुपासिता ॥
अतीते मासि गर्भस्य वृद्धिरासीद्दिने दिने ।
चिदम्बरेश्वरं कृत्वा यजमानं द्विजोत्तमाः ॥
तृतीयादिषु मासेषु चक्रुः कर्माणि वेदतः ।
प्राप्ते तु दशमे मासि विशिष्टागर्भगोलकः ॥
प्रादुरासीन्महातेजाः शङ्कराचार्यनामतः"

इत्यादिना शङ्कराचार्यनाम्ना प्रादुर्भवन्तं गोलकं निरूपितवान् । तथा च मनुरपि तृतीयाध्याये—

"परदारेषु जायेते द्वौ सुतौ कुण्डगोलकौ ।
पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः ॥
तौ तु जातौ परक्षेत्रे प्राणिनौ प्रेत्य चेह च ।
दत्तानि हव्यकव्यानि नाशयेते प्रदायिनाम्"

इत्यादिना परदारेषूत्पन्नयोः कुण्डगोलकयोर्हव्यकव्यनाशकत्वं ब्रूते । एवं वृद्धगौतमीये धर्मशास्त्रे चतुर्थाध्याये—

"कानीनश्च सहोढश्च तावुभौ कुण्डगोलकौ ।
आरूढवनितो जातः पतितस्याऽपि यः सुतः ॥
षडेते विप्रचण्डाला निषिद्धाः श्वपचादपि"

इत्यादिना गोलकस्यापि कानीनादिषडन्यतमत्वेन श्वपचादपि निषिद्धत्वं विप्रचण्डालत्वञ्चेति सामान्यराक्षसाद्ब्रह्मराक्षसस्य क्रूरत्वमिव सामान्यचण्डालाद्विप्रचण्डालस्याधमत्वं श्वपचचण्डालादपि निषिद्धत्वञ्चेति । तथाच तेषां गुरुः शङ्कराचार्यः श्वपचादपि निषिद्धो विप्रचाण्डालो बभूवेति तदीयशिष्याः सर्वेऽपि स्वत एव श्वपचादपि निषिद्धाश्चण्डाला इति न काप्यनुपपत्तिः

एवं वृद्धगौतमीये द्वाविंशाध्याये—

"विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ।
मयि भक्तिं न कुर्वन्ति चण्डालसदृशा हि ते" इति ।

तथा ब्रह्माण्डपुराणे श्रीरङ्गमाहात्म्ये षष्ठाध्याये—

"अनाचारान्दुराचारानज्ञातॄन् हीनजन्मनः ।
मद्भक्तान् श्रोत्रियो निन्दन् सद्यश्चण्डालतां व्रजेत्"

इति च विष्णावभक्तानां वैष्णवनिन्दकानाञ्च चण्डालत्व-कथनाद्ये तच्छिष्या विष्णवभक्ता वैष्णवनिन्दकाश्च तेऽपि सर्वे चण्डाला इत्याहुः ।

तन्न मनोरमम्—भागवते ( च० अ० २४ )

"अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित्"
"इत्युनुक्काशहृदयो भगवानाह ताञ् शिवः ।
बद्धाञ्जलीन् राजपुत्रान्नारायणपरो वचः" इति ।
(द्वा० अ० १३) "वैष्णवानां यथा शम्भुः" इति च-

शम्भोर्भागवतप्रियत्व-नारायणपरायणत्व-वैष्णवाग्रगण्यत्वाभिधानेन तदवतारभूतश्रीशङ्कराचार्यस्य वैष्णवमुखतश्चण्डालत्वोक्तेरनौचित्यात् । "किमप्यत्राभिजायन्ते योगिनः सर्वयोनिषु । प्रत्यक्षितात्मनाथानां नैषां चिन्त्यं कुलादिकम्" इति नारदपञ्चरात्र-भारद्वाजसंहितान्यासोपदेशप्रथमाध्यायवचनबलेन तादृशानां गोलकादिजन्मनोऽचिन्तनीयत्वोक्तेश्च । यदा श्रीविष्णोराज्ञां पुरस्कृत्य भगवान् श्रीशिव एव देवतानां हितायासुरमोहनाय च कपालचर्मभस्मास्थिधारणरूपां पाषण्डिनां गर्हितां वृत्तिं स्वीकृत्य तामसानि पुराणानि मोहनानि शास्त्राणि च कृत्वा कणादगौतमादिमहर्षिद्वारा स्वयञ्च पाषण्डमार्गं प्रवर्त्त्यासुरान् मोहयामास—तदा तदंशावतारभूतो भगवान् श्रीशङ्कराचार्योऽपि चिदम्बरपुरे गोलकजन्मनाऽवतीर्य मायावादकथनेनासुरप्रकृतीन् मोहयामासेति न तस्य दूषणं, तत्कृत्यस्य भगवदाज्ञानुरूपत्वात् । तस्माद्ये वैष्णवनिन्दकांश्चण्डालान्वदन्ति तेषां मते वैष्णवाग्रण्यशिवांशसमुद्भूतशङ्कराचार्यनिन्दकाः कथन्न चण्डालतरा भवेयुः ? यदि च तस्यासुरमोहनकृत्यनिरूपणमेव निन्दा स्यात्तदा बुद्धावतारिणो विष्णोरपि तत्कृत्यं निन्दैव भवेत्, अतश्च "असुराणां सुधादानं सर्पाणामिव दुर्नयम् । मत्वा जातिनृशंसानां न तां व्यभजदच्युतः

इत्यष्टमस्कन्धोक्तन्यायेनाऽनधिकारिणो मोहयित्वा तेभ्यो गोप्यवस्तुनो गोपनस्य विवेककार्यत्वेन प्रशंसारूपत्वात्तत्कृत्यस्य निन्दात्वापगम एवाऽविवेककार्यम् ।

निरूपितश्चायमासुरमोहनरूपोऽर्थो रुद्रस्य पद्मपुराणोत्तरखण्डे ( अध्याय २३५ ) उमामहेश्वरसंवादेन—

"महादेव उवाच—

"इत्याकर्ण्य हरिर्वाक्यं देवानां च भयानकम् ।
तान्समाश्वास्य दिक्पालान्मामाह पुरुषोत्तमः ॥

श्रीभगवानुवाच—

त्वंहि रुद्र ! महाबाहो ! मोहनार्थं सुरद्विषाम् ।
पाषण्डाचरणं धर्मं कुरुष्व सुरसत्तम ! ॥

तामसानि पुराणानि कथयस्व च तान् प्रति ।
मोहनानि च शास्त्राणि कुरुष्व च महामते ! ॥

इत्यारभ्य—

"भस्मास्थिधारिणः सर्वे भविष्यन्ति ह्यचेतसः ।
त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः ॥

तेषां मतमधिष्ठाय सर्वे दैत्याः सनातनाः ।
भवेयुस्ते मद्विमुखाः क्षणादेव न संशयः ॥

अहमप्यवतारेषु त्वाञ्च रुद्र महाबल ! ।
तामसानां मोहनार्थं पूजयामि युगे युगे ॥

तच्छ्रुत्वाहं यथोक्तं तु वासुदेवेन भामिनि ! ।
सुमहद्दीनवदनो बभूवात्र वरानने ! ॥
नमस्कृत्वाथ तं देवमब्रुवं परमेश्वरम् ।
त्वयोदितामिदं देव ! करोमि यदि भूतले ॥
तत्तु नाशाय मे नाथ ! भविष्यति न संशयः ॥

एवमुक्ते ततो देवि ! समाश्वास्य च मां पुनः ।
आत्मनाशाय ते नात्र भवत्वित्याह मां हरिः ॥

दत्तवान् कृपया मह्यमात्मनामसहस्रकम् ।
षडक्षरं महामन्त्रं तारकं ब्रह्म उच्यते ॥

इत्यादि । उक्तञ्च वराहपुराणे (अ० ७१) देवान् प्रति भगवता—

"एष मोहं सृजाम्याशु यो जनं मोहयिष्यति ।
त्वञ्च रुद्र ! महाबाहो ! मोहशास्त्राणि कारय ॥
अल्पायासं दर्शयित्वा मोहयाशु महेश्वर ! " इति ।

ये चाजिज्ञासितगुरवोऽनुपासितवृद्धाः पण्डितमानिनः—पुराणेषु विष्णुवैष्णवप्रशंसार्थका इतिहासभागा वैष्णवैः प्रक्षिप्तास्तेषु शैवादीनां विश्वासायोमामहेश्वरादिसंवादाश्चोपन्यस्ता इत्यादिकमनल्पं जल्पन्ति ते चानादिपापवासनावासितस्वान्ततया द्विष्णुवैष्णवद्वेषबुद्ध्यैवं प्रलपन्तो वस्तुतः शिवादिसकलदेवताद्वेषिणो भवन्ति सुधैव ते मूढाः स्वात्मनो नरकगामित्वं सम्पादयन्ति । हन्त, न यैः कदाचिद्वैष्णवानामपि प्राचीनतरा महान्तः पुस्तकालया अन्विष्टा नचैतद्विषये केऽपि स्वीया गुरवोऽपि जिज्ञासिता नापि विद्वत्परिषत्सु किमपि निर्णीतमथापि स्वैरमेवेत्थं जल्पन्तो दृश्यन्ते पामरा इति परा काष्ठा साहस्य नीचानाम् ।

नहि लोकप्रसिद्धप्रचण्डपाण्डित्यवैभवः साङ्ख्यप्रवचनभाष्यकारो विज्ञानेश्वरो भिक्षुरेतेभ्योऽपि मन्दमतिर्नाप्येतेभ्योऽर्वाचीनः येन स्वसिद्धान्तनिन्दापरिजिहीर्षुणा स्वकीयसाङ्ख्यप्रवचनभाष्यभूमिकायां पद्मपुराणोत्तरखण्डस्थः कलौ ब्राह्मणरूपिणा शङ्कराचार्येण कथितस्य मायावादस्य असच्छास्त्रत्वप्रच्छन्नबौद्धत्वादिनिरूपणपर इतिहासः सोपपत्तिकः समुदाहृतः । यथा—

(अत एव पद्मपुराणे ब्रह्मयोगदर्शनातिरिक्तानां दर्शनानां निन्दाप्युपपद्यते । यथा तत्र पार्वतीं प्रतीश्वरवाक्यम्—

"शृणु देवि ! प्रवक्ष्यामि तामसानि यथाक्रमम् ।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् ।
मच्छक्त्यावेशितैर्विप्रैः सम्प्रोक्तानि ततः परम् ॥
कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत् ।

गौतमेन तथान्यायं साङ्ख्यं तु कपिलेन वै ॥
द्विजन्मना जैमिनिना पूर्ववेदमपार्थकम् ।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा ॥
बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ।
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ॥
मयैव कल्पितं देवि ! कलौ ब्राह्मणरूपिणा ।
अपार्थं श्रुतिवाक्यानां दर्शयंल्लोकगर्हितम् ॥
कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते ।
सर्वकर्मपरिभ्रंशान्नैष्कर्म्यं तत्र चोच्यते ॥
परात्मजीवयोरैक्यं मयात्र प्रतिपाद्यते ।
ब्रह्मणोऽस्य परं रूपं निर्गुणं वक्ष्यते मया ॥
सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे ।
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् ॥
मयैव कथितं देवि ! जगतां नाशकारणात्" इति ।

अधिकं तु ब्रह्ममीमांसाभाष्ये प्रपञ्चितमस्माभिरिति । तस्मादास्तिकशास्त्रस्य न कस्याऽप्यप्रामाण्यं विरोधो वा स्वस्वविषयेषु सर्वेषामबाधादविरोधाच्चेति ) इति ।

अत्रोदाहृतेतिहासे "मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च" इत्यत्र श्रीपुरुषोत्तमाज्ञया साक्षाद्भगवच्छङ्करप्रचारितमायावादस्यासच्छास्त्रस्य प्रच्छन्नबौद्धत्वमुक्तं युक्तं च तस्य तथात्वं यतो वादिहंसाम्बुदाचार्यशिष्यैश्श्रीमद्वेङ्कटनाथार्यैः शतदूषण्यां तन्मतस्यार्षवचनप्रामाण्यानुसारेण प्रच्छन्नबौद्धत्वमेव सुष्ठु प्रदर्शितम् ।

तथा हि——

"वेदप्रामाण्यवाङ्मात्र-कञ्चुकच्छन्नमर्मणाम् ।
बुद्धसिद्धान्तसुहृदां सन्तः पश्यन्तु बाध्यताम् ॥

अतीन्द्रिये हि धर्मादौ वेदाः प्रमाणमिति साधितं प्रथमकाण्डे तदुपजीवनेन सिद्धेऽपि प्रामाण्यं शारीरके । अतस्तथागतागमस्तत्त्वानुष्ठानयोरप्रमाणमिति सर्वमीमांसकसम्मतम् । तदेतत्सं

चिन्मात्रव्यतिरिक्तमिथ्यात्ववादे न सङ्गच्छते। तदुक्तमभियुक्तैः।

"प्रमाणत्वाप्रमाणत्वे पुण्यपापादितत्फलम्।
विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना॥
सर्वेषु लक्षणेष्वेव स्वप्रमाणगणे स्थितिः।
वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता॥
कर्मभ्यः फलसम्बन्धः पारलौक्यैहलौकिकः।
सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु" इति।

तदिह किं नाम वैषम्यमाश्रित्य वेदाः प्रमाणं बुद्धाद्युपदेशा न प्रमाणमिति निष्कृष्यते। किंशब्दस्वरूपसत्यत्वासत्यत्वाभ्युपगमेन? उत परमार्थभूतप्रामाण्याप्रामाण्याश्रयत्वेन? उत प्रमातृसत्यत्वासत्यत्वाभ्युपगमभेदेन? यद्वा सत्यभूतप्रमितिहेतुत्वाहेतुत्वाभ्याम्? किंवा नित्यत्वानित्यत्वाभ्यां, अथानादित्वसादित्वाभ्यां, उतदोषतदभावाभ्यां, अथ व्यवहारविसम्वादसम्वादाभ्याम्? अथवा महाजनपरिग्रहबहिष्काराभ्याम्? आहोस्वित् वेदत्वावेदत्वमात्रेण? अथ विद्याविशेषजनिताभिमानानभिमानमात्रेण? अथवेक्षुक्षीरादिवत्स्वात्ममात्रसाक्षिकेणाऽनिर्देश्यस्वरूपभेदेनेति। नाद्यः असिद्धेः, नहि योगाचारादिभिर्बुद्धप्रणीतोऽक्षरराशिरसत्य इत्यभ्युपगम्यते, नाऽपिभवता वेदरूपः। न वयं वेदस्य शशशृङ्गादिवदसत्यत्वमभ्युपगच्छाम इति चेत् किंतर्हि सत्यत्वमभ्युपेतम्? तदपि नेतिचेत् तर्हि को विशेषः व्यावहारिकापरपर्यायकाल्पनिकसत्यत्वाभ्युपगम इति चेन्न, तैरपि सम्वृतिसत्यत्वाभ्युपगमात्। अयमेव तावद्विशेष इति चेन्न पर्यायमात्रस्य वैषम्यानाधायकत्वात् अन्ततो वञ्चनार्थत्वस्याऽप्युभयोरविशेषात्। यथाहुः—

"तुल्यार्थत्वेऽपि चैतेषां मिथ्यासम्वृतिशब्दयोः।
वञ्चनार्थ उपन्यासो लालावक्त्रासवादिवत्॥
नास्तिक्यपरिहारार्थं सम्वृतिः कल्पितेति च" इति।

नच युष्माभिः सम्वृतिसत्यत्वस्यावाच्यत्वं सङ्केतितम्। उक्तं च गूढपाषण्डिगोष्ठीगरिष्ठैः तदेतत्सम्वृतिरिति गीयत इति। अस्तु वा तदभ्युपगमेन वैषम्यम्, भवता तु निपुणधिया द्वयोरपि व्यावहारिकसत्यत्वमविशिष्टमेष्टव्यम्, व्यवहारानुबन्धित्वमात्रस्य तुल्यत्वात्, अतो भवता परित्यक्तपक्षपातेन न तद्धि

ष्कारः कार्यः। यदि चाभ्युपगमसिद्धेन सत्यत्वेन प्रामाण्य-सिद्धिः तर्हि वैभाषिकाद्यागमानां तदभ्युपेतेन तेन तत्सिद्धिर-निवार्या। एतेन द्वितीयतृतीयचतुर्था निरस्ताः। विशेषतोऽपि ब्रूमः—द्वितीये तावत्प्रामाण्यलक्षणवैषम्यासिद्धिः प्रामाण्याश्रयत्वे-नेति वदता साध्यमेव साधनत्वेनोपन्यस्तम्। ननु विशेषण-विशिष्टाकारेण साधनत्वं स्वरूपतस्तु साध्यत्वमिति चेन्न, विशेष्यादौ विशिष्टस्याप्यसिद्धेः।

भवन्मते विशेषणमप्यसिद्धमेव वेदप्रामाण्यस्याऽपि ब्रह्मव्य-तिरिक्तस्य पारमार्थ्यानभ्युपगमात्, तदभिमानमात्रस्य चोभयो-रविशेषात्। तृतीयेऽपि सत्यप्रमातृत्वेन कस्तावदिष्यते भवता? किं संविन्मात्रमुत तदेवोपहितमुतोपाधिभेद एव,आद्ये व्याह-त्यपसिद्धान्तौ। अनन्तरे प्रमातृत्वस्य सत्यतानभ्युपगमान्नेष्ट-सिद्धिः। तत्र स्वरूपमात्रस्य सत्यता योगाचारैरप्यङ्गीक्रियते। उपाधिमात्रपक्षे तु उपाधिस्वरूपस्य तत्प्रमातृत्वस्याऽप्यसत्यत्व-मेवेति। नाऽपि चतुर्थः,विकल्पासहत्वात्, तत्र किं प्रमितेः स्वरूपतः सत्यत्वं विवक्षितमुत विषयतः? न पूर्वः, शास्त्रज-न्यायाः प्रमितेर्भवता स्वरूपसत्यत्वानभ्युपगमात्। तेन तु तद-भ्युपगमेन तदागमस्यैव प्रामाण्यापातः। तुल्यैस्तु तदपि नेष्यत इति त एव भवतोऽत्रान्तरङ्गसम्बन्धिनः। नाप्युत्तरः विषयतः सत्यत्वस्य चिद्व्यतिरिक्तांशे भवता योगाचारेणाप्यनभ्युपग-मात्। चिदंशस्य विषयत्वेऽभ्युपगम्यमानेऽपि सत्यत्वमुभय-सम्मतम्, तत्र क्षणिकत्वनित्यत्वादिभेदस्तु दुरुपपादः, निर्धू-तसमस्तधर्मविप्लवा हि सम्विद्भवद्भिस्तैश्च परिगृह्यते। नाऽपि पञ्चमः,आविद्यकस्य वेदस्य भवताऽपि नित्यत्वानभ्युपगमात्; अभ्युपगमे वा नित्यसंसारादिप्रसङ्गात,क्षणिकत्वनित्यत्वादिकल्प-नाभेदस्याऽप्यप्रयोजकत्वात। नाऽपि षष्ठः, अविद्याकल्पित-त्वाभ्युपगमेनाऽनादित्वासिद्धेः अनादित्वेनैवेयं कल्पनेति चेन्न, बाह्यैरपि सर्वज्ञसन्तानान्तरितधर्मदेशनासन्तानस्य अनादित्वा-भ्युपगमात्,क्षणभङ्गतदभावादिकं तु वाक्यार्थयाथार्थ्ये प्रत्यकि-ञ्चित्करमेव। नाऽपि सप्तमः, तत्पक्षेण तदागमस्य दोषमूल-

त्वाभावात्, भवत्पक्षेण तूभयोरपि दोषमूलत्वाविशेषात्, वक्तृदोषो वेदेनाऽभ्युपेत इति चेत्, किं दुष्टेन्द्रियादिषु सोऽभ्युपेतः ? येन तदप्रामाण्यं सिद्ध्येत। अतो येन केनाऽपि दोषेणाऽप्रामाण्यं स्यादित्यनुसन्धत्स्व। अविद्याख्यदोषमूलकत्वमपि वेदस्य नेष्टमिति चेदागतोऽसि पन्थानम्, अत एव कल्पितत्वादेरपि प्रतिक्षेपात्। अकल्पितत्वेऽपि प्रतीतिबाधाभ्यां मिथ्यात्वमिति चेन्न, ब्रह्मणोऽप्यकल्पितस्य त्वदभिमतयुक्त्याभासैर्बाधप्रसङ्गात्, अनिर्वचनीयकुसृतेश्च निरसिष्यमाणत्वात्। नाऽप्यष्टमः; कारणदोषाविशेषे विसम्वादानुदयस्याऽकिञ्चित्करत्वात्; दोषज्ञानेनैव बाधसिद्धेः; तथा चाहुः—

"दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत्" ॥ इति।

किञ्च बाह्यागमेषु न विसम्वादस्त्वया सुवचः अदृष्टस्याऽतीन्द्रियत्वेन तत्र तदयोगात्, दृष्टार्थेषु विषहरणाद्युपदेशेषु तत्राऽप्यविसम्वाददर्शनात्; तत्त्वविषये तु प्रत्यक्षादिविसम्वादस्य तद्विरोधगमनिकाकुसृतेश्चोभयतुल्यत्वात्; वेदाधीनस्य सम्विन्नित्यत्वादिरूपविसम्वादस्य वेदप्रामाण्यसिद्धिसमनन्तराभिधेयत्वात्; अन्यथा विपरिवर्त्तप्रसङ्गात्। एतेन नवमोऽपि दत्तोत्तरः; बहुजनविवक्षायां समानत्वात्; निपुणजनविवक्षायां सर्वेषामप्यज्ञानभ्रमादिकलुषितत्वाभ्युपगमेन त्वत्पक्षे तदसिद्धेः; हेतुदर्शनरहितपुरुषपरिग्रहाविवक्षायामपि परमार्थतः कारणदोषे निर्णीते दोषानभिज्ञैः भ्रान्तैरेव परिग्रह इत्यायातम्, ततश्च न विशेषः। नाऽपि दशमः, सञ्ज्ञावैषम्यमात्रस्याऽकिञ्चित्करत्वात्; तद्व्यवहारभेदरूपस्य तु किञ्चित्करस्य प्रस्तुतानुपयोगात्। नाप्येकादशः, तथाविधाभिमानस्य पुरुषभेदेनोभयत्रापि सुलभत्वात्; न तत्र वयं प्रामाण्यमभिमन्यामह इति चेत्; ते वा किं वेदे, अतो यस्य कस्यचिदभिमानसिद्धं प्रामाण्यमिति त्वयैव स्थापनीये त्वमेव कथं तत्प्रामाण्यं नाभिमन्यसे। द्वादशस्तु परिशिष्यते; तत्र स्वात्मशब्देन किं सर्वेषां प्रमातृणां स्वात्मा विवक्षितः, उत भवदन्तरात्मा ?। नाद्यः, इक्षुक्षीरादिरसभेदवत् "ज्योतिष्टोमेन स्वर्ग-

कामो यजेत" "चैत्यं वन्देत स्वर्गकामः' इत्यनयोः प्रामाण्याप्रामाण्यलक्षणभेदस्यान्यैरनुपलम्भात्; नेतरः, भवत्स्वात्मानमपि हि वथमितरात्मसमानतयैवोन्नयामः; रत्नतत्त्वपरीक्षकवदहमतिशयितप्रज्ञ इति चेत्, सौगतेनाऽप्येवमुक्तं किमुत्तरम्? मध्यस्थदृष्टिरिति चन्न; तदसिद्धेः। अस्तु वेदप्रामाण्यमप्यविचारितरमणीयं किं नश्छिन्नमिति चेत्? प्रथमं तावद्वैषम्योपपादनाभिमानः, ततो वैदिकत्वविडम्बनम्, पश्चात्तत्त्वानुष्ठानव्यवस्थाभङ्गः, ततश्च स्वर्गापवर्गगमनसरणेः एवं च सौगतसौहार्दभयपलायितेन द्वैवर्गिकमतमहादुर्गमेवाऽनुप्रविष्टमिति। अत्र च प्रामाण्यादेरप्रयोजका एव केचित्कल्पा मन्दमतिसम्मोहशमनायोपन्यस्य निरस्ताः। एतदभिप्रायेण यादवप्रकाशैरुक्तम्—

"वेदोऽनृतो बुद्धकृतागमोऽनृतः
प्रामाण्यमेतस्य च तस्य चाऽनृतम्।
बोद्धाऽनृतो बुद्धिफले तथानृते
यूयं च बौद्धाश्च समानसंविदः"॥ इति।

किञ्च प्रत्यक्षतोऽनुमानतश्च भवद्भिर्निर्विशेषं प्रसाध्यते, ततश्च प्राप्तार्थतयापि शास्त्राप्रामाण्यम्, छिन्नावयवानुमानवाक्यपाठमात्रेण ब्रह्मविद्यानिष्पत्तौ कः खलु जडः श्रुतिनिकरशिखरपरिशीलनप्रयासादिकमारभेत।

न ब्रूमस्तर्ह्यनुमानादिकमस्मत्सिद्धान्तसाधनतयेति चेत्? किमिदं श्रुतिप्रामाण्यभङ्गभीरुतया, उतानुमानादेस्तत्र प्रामाण्यायोगात्। नाद्यः, भवद्भिरनुक्तेऽपि तत्सद्भावमात्रेण श्रुतिप्रामाण्यभङ्गस्य दुर्वारत्वात्; सम्प्लवादयस्य च शास्त्रयोन्यधिकरणनिरस्तत्वात्। न द्वितीयः ज्ञानोदयादेवानुत्पत्तिलक्षणस्याप्रामाण्यस्यासिद्धेः; एककोटिनियततया च संशयरूपस्याऽप्यभावात्, निपुणतरप्रयोगे च प्रयोगदोषाणामभावात्। विपर्ययलक्षणं तु विषयापहारमन्तरेण न सिध्यतीति। तथा च सति तुल्यविषयतया तत एव शास्त्रमप्यप्रमाणमिति घट्टकुट्यां प्रभातम्। एवञ्च सत्यद्वैतवाक्यानां न तत्त्वावेदकत्वं द्वैतवाक्यानामेव तत्त्वावेदकत्वमित्यभिमतविपर्यासश्च। अन्ततः शास्त्रप्रामाण्यमप्यसाकमिष्ट-

मेवेतिचेन्न; पूर्वन्यायेन दत्तोत्तरत्वात्। असन्दिग्धाविपर्यस्त-बोधोदयस्य दुरपह्नवत्वात्। बाध्यमिथ्यात्वे च वैदिकव्यपदेश-कञ्चुकं मुञ्चतस्ते बाह्यसमयसुरङ्गाप्रवेशमन्तरेण कथासमरसीम्नि संशयापत्तेः। तदेतदखिलमभिसन्धाय भाष्ये सन्मात्रग्राहिप्रत्यक्ष-प्रतिक्षेपाय गृहीतमात्रग्राहित्वेन सन्मात्राभिमतब्रह्मस्वरूपपर-वेदान्तवाक्यानामप्रामाण्यप्रसङ्ग उदाहृतः। स्थलान्तरेषु विप्रकीर्णं शेषमवधातव्यमिति"

इति तेषां शतदूषणीचतुर्दशवादे प्रच्छन्नबौद्धत्वेन निरूपणात्, चण्डमारुतादावुक्तस्यैवार्थस्य महाविस्तरेण दृढीकरणात, विष्णु-गृहीतबुद्धावतारोपदेशसाजात्येन प्रच्छन्नबौद्धत्वनिश्चयाच्च बौद्धाना-मिव रुद्रगृहीतशङ्करावतारोपदेशभाजामप्यवैदिकत्वं कथमिव वक्तुं न शक्येत। तस्मात्कलियुगावतीर्णवामदेव—प्रचारितमाया-वादस्य स्वांशेऽबाधान्नैकान्ततोऽप्रामाण्यम् "यत्परः शब्दः स शब्दार्थः" इति। न्यायात्तद्वादस्यासुरप्रकृतिजनमोहनार्थे प्रवृत्तत्वादिति।

किञ्च भगवता श्रीगीताचार्येणाऽपि षोडषाध्याये—

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्"

इतिपद्येन पञ्चषाणां जगतोऽप्रतिष्ठितत्वानीश्वरत्वपरस्परसंयो-गोत्पन्नत्वाद्यङ्गीकुर्वतां जैन-बौद्ध-चार्वाक—ताथागत—सौगतादीनां मतेन सह जगतोऽसत्यत्ववादरूपस्य शाङ्करमतस्याऽप्युपन्यासा-दासुरप्रकृतिककोटिप्रविष्टत्वेन वेदबाह्यत्वकथनं सुसङ्गतम्। अतस्तेषां प्रच्छन्नबौद्धत्वं सूपपन्नम्।

एवमन्ये तथाविधाः पञ्चरात्रस्य कल्पितत्वमेके चैकदेशीयत्वम-परे तदुक्तपारमैकान्त्यहेतुतापादिसंस्काराणामवैधत्वञ्च वदन्तः स्वीयं बालिशत्वं प्रकटयन्ति, नच ते भारतभागवतवराहादिपुराणेषु पराशरादिस्मृतिषु तत्प्रतिपादकांशं नेत्रे उन्मील्य पश्यन्ति। केचन पश्यन्तोऽपि प्रक्षिप्तस्तमंशं वैष्णवैः प्रक्षिप्तं वदन्ति। तेषां कथनं विवेकशालिभिर्मद्यपानां वचनमिव त्याज्यम्, मोहप्रमादा-ज्ञानप्रदजघन्यगुणवृत्तिस्थवचनत्वात्।

भारते किल नारायणीयोपाख्याने महासंरम्भेण पञ्चरात्रस्य षडाविर्भावतिरोभावानुपन्यस्य, सप्तमाविर्भावस्य प्रलयपर्यन्तस्थायित्वं नारदद्वारा पुनः प्रवर्त्तनञ्चोक्तम् । भागवते च (प्र० अ० ३)

"तृतीयमृषिसर्गं च देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः"॥ इति ।

वाराहे च षट्षष्टितमेऽध्याये—

"अन्यच्च ते वरं दद्मि शृणु नारद ! साम्प्रतम् ।
यदिदं पञ्चरात्रं मे शास्त्रं परमदुर्लभम् ॥
तद्भवान्वेत्स्यते सर्वं मत्प्रसादान्न संशयः ।
वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज ! ॥
प्राप्योऽहं नान्यथा वत्स ! वर्षकोट्ययुतैरपि" इत्यादि ।

तथा बृहत्पाराशरीयधर्मशास्त्रे (अ० ५)—

"पौराणं पञ्चरात्रं च योऽभ्यसेन्मुक्तिमाप्नुयात् ।
यो वेदस्तानि वैतानि यान्येतानि च सा श्रुतिः"
"पञ्चरात्रविधानेन स्थण्डिले वाऽपि पूजयेत्"

इत्यादिना तत्तदार्षग्रन्थेषु पञ्चरात्रस्य महता विस्तरेण प्रतिपादनं दृश्यते । किञ्च—

"ततः श्रीशङ्करस्तस्य मतं शैवं चखण्ड ह ।
नीलकण्ठः स्वकं पक्षं त्यक्त्वाऽद्वैतमथाऽक्षिपत्"॥

इति शाङ्करदिग्विजयसारपञ्चदशसर्गोक्तप्रकारेण यस्य भगवता शङ्कराचार्येण सह जातेऽपि शास्त्रार्थे स्वमतपरिजिहीर्षैव नोदिता तेन श्रीशङ्कराचार्यकालीनेन महाशैवेन नीलकण्ठेन भारतव्याख्यानावसरे यानि पञ्चरात्रस्थापकप्रकरणानि तानि प्रक्षिप्तत्वेनाऽगणयित्वैव व्याख्यातानि तथा—

"अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते ।
यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्त्येकमूर्त्तिकम्"

इति भागवतदशमस्कन्धचत्वारिंशत्तमाध्यायसप्तमपद्यव्याख्यानावसरे स्मार्त्तमतकूटस्थश्रीधरभिक्षुणाऽपि "साङ्ख्ययोगत्रयीमार्गा उक्ता वैष्णवशैवमार्गावाह, द्वयेन—अन्ये चेति । संस्कृतात्मानो

वैष्णवशैवदीक्षया दीक्षिताः सन्तस्ते त्वयाऽभिहितेन पञ्चरात्रादि-विधिना" इत्यादिना पञ्चरात्रस्य भगवदभिहितत्वं संस्कृतात्मपदस्य पञ्चरात्रोक्ततापादिपञ्चसंस्कारपूर्वकवैष्णवदीक्षया दीक्षितत्वञ्च स्पष्टमभिहितम्। अतो ऽपि केषाञ्चिद्भारतादिसद्ग्रन्थेषु पञ्चरात्र-प्रतिपादकांशस्य प्रक्षिप्तत्वजल्पनम् अन्येषां पञ्चरात्रोक्ततप्तचक्रादि-संस्कारणामवैधत्वजल्पनञ्च दूरतोऽपास्तम्।

अपिच पञ्चरात्रेण विरुद्धांशसद्भावमुपपादयता श्रीमता शङ्कराचार्येणाऽपि शारीरकभाष्यद्वितीयाध्यायद्वितीयपादस्थोत्पत्त्य-सम्भवाधिकरणचतुस्सूत्र्या जीवोत्पत्तिभगवद्व्यूहचतुस्सङ्ख्या-व्यवस्थयोर्द्वयोरेव विरुद्धांशरूपताऽभिहिता न त्वन्यांशस्य कस्य-चिदित्यतोऽपि पञ्चरात्रसिद्धतप्तचक्रादिसंस्कारणामविरुद्धांशरूप-तैव तदनुमता विज्ञायते। यदि पुनः पञ्चरात्रसिद्धतापादि-संस्काराणां विरुद्धांशरूपता शङ्कराभिमता स्यात्, यदि वा पुनस्तन्नि-षेधकानि वचनानि सम्प्रति प्रतिवादिभिरुदाह्रियमाणानि पारमार्थ-कानि च स्युः—तदा स्वमतविरोधिनः पञ्चरात्रशास्त्रस्य येन केनाऽपि प्रकारेणांशविशेषेऽपि कथञ्चिदप्रामाण्योपपादनबद्धस्पृहेण स्मार्तमतकूटस्थेन श्रीमता शङ्कराचार्येण तादृसवचनान्युदाहृत्य तप्तचक्राद्यङ्कनांशेऽपि तदप्रमाणता किमिति नोपपादिता स्यादिति-पर्यालोचने—पञ्चरात्रप्रसिद्धमभिगमनोपादानयोगस्वाध्यायेज्या—लक्षणं भगवदाराधनमभ्युपगच्छतः श्रीशङ्कराचार्यस्य तत्प्रकारान्तः-पातितप्तचक्राद्यङ्कनमनुमतमेवेति सम्प्रति प्रतिवादिभिरुद्धाह्रिय-माणानि चक्राद्यङ्कनादिनिषेधकवचनानि तदानीमस्थितानि पश्चा-दर्वाचीनैरेव कल्पितानीति च सुधियां सुज्ञानम्। ईदृशं स्वमत-कूटस्थश्रीमच्छङ्कराभिप्रायमनुसन्दधाने-रामार्चनचन्द्रिकाकार-राम-नाममाहात्म्यकार—विष्णुभक्तिचन्द्रोदयकारैर नन्दवनाच्युताश्रम-नृसिंहारण्यभिक्षुभिर्जीवब्रह्माद्वैतमभ्युपगच्छद्भिरेव भगवदारा-धनाङ्गतया चोदितं पाञ्चरात्रिकैरनुष्ठीयमानं तप्तचक्राद्यङ्कनं स्वस्व-ग्रन्थेष्वावश्यकमेव सर्वेषां न तु विरुद्धमिति निराबाधं प्रतिपादि-तम्। तस्मादाधुनिकानां वाचाटानां पाषण्डानां प्रलपितं रुतमिव करटानां सुधीभिः सर्वमेवोपेक्ष्यम्।

अथाऽपरे जगद्वञ्चनचातुरीधुरीणाः स्वपरलोकशत्रवः शठाः सद्धर्मवर्त्मनि स्थितानृजुबुद्धीन् सज्जनान् सन्मार्गतः प्रच्यावयितुं कृतोद्योगाः—" न शूद्रा भगवद्भक्ताः " "श्वपचोऽपि महीपाल !" इत्यादीनार्षश्लोकानुपन्यस्य इत्यादयः श्लोकाः स्वमाहात्म्यप्रतिपादनार्थं वैष्णवैर्निर्मिता इति यद् वदन्ति; तदपि श्रीविष्णुसम्बन्धप्रतिपादकसात्विकसत्पुराणाद्यनवलोकनकृतम् ।

यतः पद्मपुराणे स्वर्गखण्डे ( अ० ३१ )

"श्रूयतामद्भुतं ह्येतद्रहस्यं वैश्यसत्तम !
सम्मतं धर्मराजस्य सर्वलोकामृतप्रदम्" ॥९८॥

इत्यारभ्य विस्तरेण विष्णुसम्बन्धिनां माहात्म्यवर्णनात्, तत्प्रकरण एवातिप्राचीनेष्वपि पुस्तकेषु "न शूद्रा" इति श्लोकस्य च सत्त्वात् । उद्धृतश्चैतद्धरिभक्तिविलासग्रन्थे ( वि० १० ) श्रीगोपालभट्ट गोस्वामिना—

"न यमं यमलोकं च न दूतान् घोरदर्शनान् ।
पश्यन्ति वैष्णवा नूनं सत्यं सत्यं मयोदितम् ॥
श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् ।
वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयम् ॥
न शूद्रा भगवद्भक्तास्ते तु भागवताः स्मृताः ।
सर्ववर्णेषु ते शूद्रा ये न भक्ता जनार्द्दने ॥
विष्णुभक्तस्य ये दासा वैष्णवान्नभुजश्च ये ।
तेऽपि क्रतुभुजां वैश्य ! गतिं यान्ति निराकुलाः ॥" इति ।

तथा वृद्धगौतमीयधर्मशास्त्रे द्वाविंशाध्याये—

"नश्यन्ति तामसा भावाः शूद्रस्य मयि भक्तितः"
"चण्डालो वा प्रियः कश्चित्सर्वपापसमन्वितः ।
यदि मां सततं ध्यायेत्स पापेभ्यः प्रमुच्यते ॥
विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ।
मयि भक्तिं न कुर्वन्ति चण्डालसदृशा हि ते ॥
वृथा दत्तं वृथा जप्तं वृथा चेष्टं वृथा हुतम् ।
वृथा तीर्थेषु दत्तं स्यात् यो न भक्तो मयि द्विजः ॥

यत्कृतं च हुतं चाऽपि यदिष्टं दत्तमेव वा ।
अवैष्णवोक्तं तत्सर्वं राक्षसा एव भुञ्जते"
"अपार्थकं प्रभाषन्ते शूद्रा भागवता इति ।
न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः" इति ।

तथा नारदीये श्रीवामदेवरुक्माङ्गदसम्वादे——
श्वपचोऽपि महीपाल ! विष्णुभक्तो द्विजाधिकः ।
विष्णुभक्तिविहीनस्तु यतिश्च श्वपचाधमः" इति ।

स्कान्दे रेवाखण्डे श्रीब्रह्मोक्तौ—
"श्वपचादपकृष्टत्वं ब्रह्मेशानादयः सुराः ।
तदैवाच्युत ! यान्त्येते यदैव त्वं पराङ्मुखः" इति ।

द्वारकामाहात्म्ये—प्रह्लादबलिसम्वादे—
"सङ्कीर्णयोनयः पूता ये भक्ता मधुसूदने ।
म्लेच्छतुल्याः कुलीनास्ते ये न भक्ता जनार्दने" इति ।

गारुडे च—
"सत्रयाजिसहस्रेभ्यो सर्ववेदान्तपारगः ।
सर्ववेदान्तवित्कोट्या विष्णुभक्तो विशिष्यते ॥
वैष्णवानां सहस्रेभ्य एकान्त्येको विशिष्यते ।
एकान्तिनस्तु पुरुषा गच्छन्ति परमं पदम्" इति ।

तथा पद्मपुराणे—( सृ० अ० ७६ श्लो० ६३ )
"एकेनाऽपि सुपुत्रेण कुलत्राणं च धीमता ।
एकोऽपि वैष्णवः पुत्रः कुलकोटिं समुद्धरेत्" इति ।

तत्रैव ब्रह्मखण्डे प्रथमाध्याये—( श्लो० २० )
"यत्र यत्र कुले चैव एको भवति वैष्णवः ।
कुलं तस्य यदा पापैर्युक्तं तन्मोक्षगामि वै" इति ।

इतिहाससमुच्चये लोमशवाक्यम्—
"शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा ।
वीक्षते जातिसामान्यात् स याति नरकं ध्रुवम् ॥
स्मृतः सम्भाषितो वापि पूजितो वा द्विजोत्तमाः ! ।
पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया" इति ।

अथ मुद्गलोपनिषदि—

"सहस्रशीर्षेत्यत्र स शब्दोऽनन्तवाचकः।
अनन्तयोजनं प्राह दशाङ्गुलवचस्तथा॥
तस्य प्रथमया विष्णोर्देशतो व्याप्तिरीरिता।
द्वितीयया चाऽस्य विष्णोः कालतो व्याप्तिरुच्यते॥
विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया।
एतावानिति मन्त्रेण वैभवं कथितं हरेः॥
एतेनैव च मन्त्रेण चतुर्व्यूहो विभाषितः।
त्रिपादित्यनया प्रोक्त—मनिरुद्धस्य वैभवम्॥
तस्माद्विराडित्यनया पादनारायणाद्धरेः।
प्रकृतेः पुरुषस्याऽपि समुत्पत्तिः प्रदर्शिता"

इत्यादिना सकलवेदसाररूपपुरुषसूक्तार्थमारभ्य तत्र च विष्णोर्मोक्षप्रदत्वमभिधायोपसंहारे च—

"तस्मादेतत्पुरुषसूक्तार्थमतिरहस्यं राजगुह्यं देवगुह्यं गुह्यादपि गुह्यतरं नाऽदीक्षितायोपदिशेत्। नाऽनूचानाय, नाऽयज्ञशीलाय, नाऽवैष्णवाय, नाऽयोगिने, न बहुभाषिणे, नाऽप्रियवादिने"

इत्यादिना तादृशपुरुषसूक्तार्थरूपब्रह्मविद्यायाः "नाऽवैष्णवाय" इत्यनेन वैष्णवव्यतिरिक्तानामुपदेशस्याऽपि निषेधाद् युक्तमेव वैष्णवसम्बन्धस्य सर्वतः प्राबल्यमिति तदज्ञानादेव वैष्णवप्रशंसापरवचनेषु संशेरतेऽनभिज्ञाः।

इतरे चास्तिकाभासाः वैष्णवाचार्याणां श्रीमद्रामानुजाचार्यादीनां शेषाद्यवतारबोधकप्रमाणेषु विप्रतिपद्यन्ते। समन्ततश्चोपलभ्यमानानां प्रमाणवचनगणानामेकदेशीयत्वादिकथनेनाऽप्रामाण्यं सङ्किरन्ते। तेऽप्यधुना प्रष्टव्या, यद् यूयं सर्वदेशीयविद्वत्ताधुरीणशङ्करानुगामिनोऽन्ये वा? तदनुगामित्वेऽपि तदन्तरङ्गशिष्यादिवचनानि भवत्सम्मतान्युतासम्मतानि? सम्मतत्वे सदानन्दादिविरचितशाङ्करदिग्विजयसारादौ तदीयशिष्यवर्गे मण्डनाख्यः सुरेश्वराचार्यो ब्रह्मणोऽवतारः, सुधन्वा भूपतिर्महेन्द्रस्याऽवतारः, पद्मपादाचार्यश्चन्द्रमोऽवतारः, प्रभाकरपुत्रो हस्तामलकाचार्यः पवनावतारः, तोटकाचार्यः

पवनदशांशावतारः, आनन्दगिरिर्गुरोरवतारः, सनन्दनाचार्योऽरुणावतारः चित्सुखाचार्यो वरुणावतारः, कौमारिलभट्टः षडाननस्य कार्तिकस्याऽवतारः मण्डनस्त्री च सरस्वत्यवताररूपा, इत्यादिकमुल्लिखितमस्ति । तथाहि शाङ्करदिग्विजयसारे प्रथमसर्गे—

"ब्रह्माऽपि ते सहायार्थं मण्डनो नाम भूसुरः ॥
भविष्यति महेन्द्रोऽपि सुधन्वानामभूपतिः"॥ ३३ ॥

द्वितीयसर्गे—

"भुविजातो मृगाङ्कोऽपि पद्मपादं वदन्ति यम् ॥
हस्तामलाभिधां जातः पवनोऽपि प्रभाकरात् ॥ ४१ ॥
पवमानदशांशेन संजातस्तोटकाह्वयः ॥
शिलादमुनिपुत्रोऽभूदुदङ्कं प्रवदन्ति यम् ॥ ४२ ॥
ब्रह्मा सुरेश्वरो जातस्तथाऽऽनन्दगिरिर्गुरुः ॥
अरुणः सनन्दनोऽभूद्वरुणश्चित्सुखाह्वयः" ॥ ४३ ॥ इत्यादि ।

तथाच शङ्कराशिष्याणां तत्तदाचार्याणां तत्तद्देवतावताररूपत्वनिर्देशे सन्ति कानिचित्प्रमाणभूतानि पुराणादिवचनान्युत न वा सन्ति ? आद्ये तान्येकदेशीयानि सर्वदेशीयानि वा स्युः ? एकदेशीयत्वे त्वस्मत्साम्यमापद्येत, सर्वदेशीयत्वं तु बाधितम् । एकदेशीयत्वेनास्मत्साम्यमपि तदास्याद् यदा तानि क्वचित्पुराणादावुपलभ्येरन् । नच क्वाप्युपलभ्यन्त अतो न सन्तीत्येव निश्चयः । तथा च प्रमाणमन्तरैव तत्तदाचार्याणां तत्तदवताररूपत्वं——जल्पतः सदानन्दस्य——कृतेः खण्डनं कुतो विस्मृतं निमीलितनेत्रैः । किञ्च तत्र प्रथमसर्गे—"ब्रह्मापि ते सहायार्थं मण्डनो नाम भूसुरः" इत्यनेन मण्डनस्य ब्रह्मणोऽवतारत्वमुक्त्वा—द्वितीयसर्गे—"विधिशापाद्भुरुर्जातो मण्डनाख्यस्तथा भुवि" इत्यनेन तस्यैवगुर्वन्तारत्वमभ्यधायीति परस्परं विरुद्धं प्रजल्पतस्तस्य वचनप्रामाण्ये किं मूलम् ? । इदं तु सम्मतत्वपक्षे । न सम्मतानि चेत् कुतः ? प्रमाणाभावादिति चेदागतस्तर्हि पन्थानम् अत एव न तदनुगामित्वम् । अन्यत्वेऽपि च तत्प्रशंसनं केवलं स्वस्मिंस्तदीयानां प्रसादसम्पादनायैवेति विज्ञायते । तस्माद् द्वित्रेभ्यो

दिवसेऽस्य आस्तिकम्मन्यानां वचांस्यदृष्टनिजगृहच्छिद्रत्वात्स्वगृहसन्दीपनाय स्वयं प्रक्षिप्तदहनायमानानीति सुज्ञेयं सुज्ञैः।

अथ पूर्वोक्तेष्वन्यतमान्दोषाभासान्हृदि निधाय सात्त्विकशास्त्रसिद्धं वैष्णवानां वैभवमसहमानस्य वृन्दावननिवासिनः कस्यचिच्चक्रपाणिनामकवर्णिनो मित्रं श्रीकृष्णचक्रदग्धायां काश्यां निवसन्नपि श्रीकृष्णचक्राङ्कितगात्रान्वैष्णवान्द्विषन्कश्चिदविपश्चिदम्बरेन्दुनवक्ष्माभिः सम्मिते ( १९१० ) विक्रमाब्दे श्रीसम्प्रदायिवैष्णवजननिन्दनोद्देशतः श्रीवैष्णवमतप्रदीपनामकं ग्रन्थं लिखतिस्म । तदा तमवलोक्य श्रीवृन्दावनस्थाः सर्वतन्त्रस्वतन्त्रा विद्वद्धुर्याः श्री-१०८ रङ्गाचार्यस्वामिनस्तत्खण्डनरूपं 'दुर्जनमुखभङ्गचपेटिका'नामकं ग्रन्थं तस्मिन्नेव वत्सरे विधाय काश्यां मुद्रापयित्वा तदीयं दुरभिमानं निराचक्रुः। उभयपुस्तकनिर्माणमुद्रापणरूपकार्यस्य व्यतीतसप्तपञ्चाशद्वर्षत्वाल्लोकं तद्वृत्तान्तानभिज्ञं मत्वा कश्चिदद्वैतपरिव्राजकबिडम्बवृत्तिर्मूर्त्तःकपटो 'लोको मां ग्रन्थकारं मत्वा पण्डितं जानीयात्' इति बुद्ध्या सप्तशास्त्रनवेन्दुमिते (१९६७) वैक्रमाब्दे श्रीवैष्णवमतप्रदीपं (श्री०प० प० पण्डितवर-रामकृष्णानन्दगिरिस्वामिभीरचितः) इति स्वरचितत्वेन काश्यां चन्द्रप्रभायन्त्रालये मुद्रापितवान्। पुस्तकारम्भपृष्ठे(सत्यमेव जयते नानृतम्)इत्यावितथाभिप्रायमशुद्धं वाक्यं विलिख्याऽपि 'अन्ततो सत्यमव जयेन्न मदनृतम्' इति स्वहृदाऽनालोच्य स्वयमेवानृतं लिलेखेति स्वयं भूरुण्डपक्षिणमनुकरोतिस्मेति महदाश्चर्यम्।

भूरुण्डः किल गिरिशिखरमध्यास्य 'साहसं मा कुरु साहसं मा कुरु' इति रुदन्नपि स्वयमुड्डीय जृम्भमाणव्याघ्रदंष्ट्राविलग्नं मांसमुपादत्त इत्यनल्पं साहसं विधत्ते। तद्वदयमपि परोपदेशाय सत्यमेव जयते नानृतमित्यबद्धं जल्पन्नाल्पमपि बिभेत्यनल्पानृतजल्पनरूपपातकसञ्चयनात्। यतो यदा स्वस्य जन्माऽपि नाऽभूत्तदैव यस्य ग्रन्थस्य खण्डनं मुद्रितमासीत्तमेव श्रीवैष्णवमतप्रदीपं स्वकृतं प्रलपन्नासौ मनागपि लज्जते मुण्डः।

उच्यते हि किञ्च धर्मशास्त्रेऽनृतस्य निस्समाभ्यधिकपातकत्वम्-

"शतसूक्ष्मसमः स्थूलः शतस्थूलसमा च गौः।

गोशतेन समो विप्रः शतविप्रसमो यतिः ।
शतभिक्षुसमा नारी नारीशतसमोऽर्भकः ।
शतार्भकवधात्पापं नानृऽतात्पातकं परम्"

इत्यादिवचनैर्गोविप्रभिक्षुस्त्र्यर्भकादिशतपातकैस्तुल्यत्वोक्तेरेकस्यैवानृतस्य । तादृशानृतकथनपातकं 'शतं वदेदेकं मालखे' दिति लौकिककन्यायसिद्धं लेखनिषेधं चाऽननुसन्धायाऽन्यकृतिं स्वकृतितया मुद्रापितवानपीति परा काष्ठाऽस्याऽनृतसाहसस्य । किञ्च—

"अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः ।
अनाख्यातः सतां मध्ये नरश्चौरो विभाव्यते"

इत्युक्तरीत्या यदाऽन्यवर्णपरावृत्त्यादिनाऽपि नरश्चौरो विभाव्यते तदा वर्णपरावृत्त्यादिकमन्तरैव यथोपन्यस्तसकलग्रन्थाऽपहर्त्ता चोरशिरोमणिरिति कथं न वक्तुं शक्येत । अत एव—

"कविरनुहरति च्छायां कुकविरपूर्वं पदं च वाक्यं च ।
सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तुभ्यम्"

इति कस्यचिद्भावज्ञस्य कवेर्नमस्योऽपि भवति । यत्पुस्तकमनेन स्वीयनाम्ना पूर्वस्मिन् वत्सरे ( १९६७ ) काश्यां चन्द्रप्रभामुद्रालये मुद्रापितं तदेव रसकुनवेन्दुमिते ( १९१६ ) वैक्रमाब्दे शिलायन्त्रे मुद्रितमासीत्तच्च वृन्दावने श्रीराधारमणीयबलदेवगोस्वामिपुत्रप्रवरश्रीकृष्णचरणगोस्वामिनां पुस्तकालयेऽद्यापि वरीवर्त्ति । द्वितीयं प्राचीनं ललिताक्षरैर्लिखितम् 'औनरेरीमजिस्ट्रेट-श्रीराधाचरणगोस्वामिपुस्तकागारे च वर्त्तते । यस्य दिदृक्षोत्पद्येत पुस्तकद्वयमधुनाऽपि तेन द्रष्टुं शक्यते ।

तस्मान्नो विश्वसेज्जातु वेषमात्रेण कुत्रचित ॥
नरः प्राज्ञः परीक्षेत चारित्रेण सदा जनम् ॥

इति निवेदयन्विरमति विद्वद्वैष्णवचरणपरिचर्योत्सुकः
श्रीबलरामस्वामिचरणशरणो
भागवताचार्यः ।

# विज्ञापनम् ।

विदिताऽस्तु प्रस्तुतवस्तुविलसद्भिमर्शसच्छेमुषीजुषां शिष्ट-विदुषां नातिचिरप्रवृत्तिरेषा प्रवृत्तिः; अस्ति कश्चिद् विपश्चिद्देशीयः प्रयागप्रदेशीयो व्याघ्रचर्माम्बरीयो वरीयोजनविद्वेषी साधुवेशी । यः खलु सुरासम्भृतं कळधौतकलशमिवाऽस्पृश्यतरमापाततो मुग्धजन-प्रलोभनं कनकफलमिव नाम्नैव प्ररोचनं महानिष्टकरं श्रीवैष्णव-जनगर्हापरं केनचन तत्प्रतीपेन निर्मितचरं श्रीवैष्णवमतप्रदीपनामकं पुस्तकमेकमासाद्य मत्त इव मुमूर्षुरिव प्रलपन् तदुपक्रमोपसंहारयोः क्वचित्किञ्चित्परिवर्त्य निर्मातुर्नाम निरस्य निजनाम विन्यस्य वा-राणसीधामनि चन्द्रप्रभानामनि यन्त्रालये मुद्रापयित्वा स्वकृतत्वेन प्रख्यापितवान् सहि मस्करी नूनं तस्करीयति परस्यार्थग्रहणेन, नहि यशस्करीयति—

"तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते ।
इतरार्थग्रहे येषां कवीनां स्याद्दुराग्रहः" इति—

निषिद्धाचरणेन च । हं हो बत महदंहो विहितवान् यद्वृथैव परकृतं महान्निन्दामहापातकं निजशिरसि निहितवान् मन्ये ?

"परापवादपैशुन्यपरनिन्दासु यो मतिम् ।
न करोति महीपाल ! तोष्यते तेन केशवः" इति—

"दोषान्परेषां हि गुणेषु साधवो गृह्णन्ति केचित्" इत्यादि ।
"यथा गतिर्दैवमनुष्ययोः पृथक् स्व एव धर्मे न परं क्षिपेत्स्थितः"

इत्यादि च सच्छास्त्रशासनमपि नज्ञातवान् । किम्वा— "नाश्चर्य-मेतद्यदसत्सु सर्वदा महद्विनिन्दाकुणपात्मवादिषु । सेर्ष्यं महापूरुष-पादपांसुभिर्निरस्ततेजस्सु तदेव शोभनम्" इत्युक्तरीत्या स्वानुरूप-मेवाचरितवान् । किञ्च, उचितमेवैतादृशानां तादृशमानुरूप्या-चरणम् । तदुक्तमभियुक्तवरैः कैश्चिदन्योक्तिनिरूपणपरैः—

"चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रम् ।
जातो दैवादुचितरचनासंविधाता विधाता ॥
यन्निम्बानां परिणतफलस्फातिरास्वादनीया ।

यथैतस्याः कवलनकलाकोविदः काकलोकः” इति।

किञ्च—“रसज्ञैरुज्झितं दूरात्सद्भिः कटु फलं हि तत्।
आस्वाद्य करटः कामं कुरुते कुरुते रतिम्” इति।
तदलं तस्यैहिकेन न्यक्कारेण।

तत्पुस्तकं मुद्रितमप्यमुद्रित—मक्षरबहुलमप्यनक्षरबहुल—मसदादरणयोग्यमपि सदादरणायोग्यं सद्विद्याविलासलब्धबुद्धि-प्रसादैः श्री * मन्महान्तराममनोहरप्रसादैरयोध्याबृहत्स्थानाधिप-तिभिः परमकृतिभिरकस्मान्निजकरकमले चित्रवर्णं कीटमिव निपतितं सकौतुकमवलोक्य सुश्लोकयसाधुचरितेभ्यो नितान्त-हृत्कमलानुध्यात श्रीकान्तपदशिखरनखरवरमणि समुद्गच्छदच्छतर-मृदुलमञ्जुविद्रुमारुणकिरणमञ्जरीछटाछुरितेभ्यः कनकमण्डपोत्तर-द्वारनिवासनिरतेभ्यः प्राकृताखिलविषयवासनाविरतेभ्यः सौहार्दा-दिसद्गुणरत्नाभरणेभ्यः श्रीबलरामस्वामिचरणेभ्यः प्रदर्शितम्। दृष्ट्वा तैरूचे पुस्तकमिदं न नवीनं किन्तु प्राचीनं प्रयागवासिना तेन सन्न्यासिना तु स्वनाम्ना मुद्रापितमात्रं यस्मिन्वर्षे इदं निर्मि-तमासीत्तस्मिन्नेव वर्षे श्रीमद्भिर्महामहिमवद्भिर्निजकीर्त्तिकादम्बिनी-सुधासारसम्पूरितसकलदिङ्मण्डलैर्वसुधातलविबुधमण्डलीमहाख-ण्डलैः सद्धर्मनिष्ठाप्रतिष्ठापनपरतया प्रख्यातनिरवद्यविद्याविभवै-र्महाबलदुर्वादि—दन्तावलदर्पदलनाकुण्ठितकण्ठीरवैः श्रीवैष्णव-जनपरमशरणैरस्मद्गुरुभिः श्रीवृन्दावनस्थश्रीरङ्गाचार्यस्वामिचरणैः तत्खण्डनमपि निर्माय वाराणस्यां मुद्रापयाञ्चक्रे। तस्य दुर्जनमुख-भङ्गचपेटिकानाम्नः खण्डनग्रन्थस्य मुद्रणस्याऽपि वसुबाण-गणितमब्दकदम्बकं व्यतीयाय। तत्पुस्कानि श्रीवृन्दावनीये श्री-रङ्गमन्दिरेऽपि स्वल्पसङ्ख्यान्येवावशिष्टानीति। एतदाकर्ण्य श्री-महान्तैरुक्तम् अस्य ग्रन्थस्य तत्समयमारभ्यैव वैष्णवेषु पठपाठन-प्रचारश्चेदभविष्यत् तर्हि पाषण्डिनामेवं धूर्तताप्रकाशनार्थमव-सरोऽपि नामेलिष्यत्।

किञ्च अद्यापि यदि भवन्तःपुनरस्य संस्करणं समुचितं मन्येरन् तर्हि वयमपि श्रीवैष्णवधर्मप्रवर्द्धिन्या—मात्मीय पाठशालायां—

* महान्तो निश्चयो येषां ते च ते।

अस्य पठन पाठने प्रचारयेम इति। उक्तस्वामिनस्तन्निशम्य कार्य-मिदमुचितमिति विबुध्य कृपाकटाक्षसञ्चारितशक्तिधरं निज-शिष्यवरं भागवताचार्येति--सुगृहीतनामानं सद्बुद्धिशास्त्रज्ञान-विनयार्जवादिगुणोज्ज्वलधामानं त्वमेतद्यथास्थलमुपयुक्तं टिप्पणी-युक्तं विधाय मुद्रापयेत्याज्ञापयाञ्चक्रुः। ततस्तेन भक्तिभरनम्रेण स्वमूर्द्धनि तदाज्ञां मालामिव निधाय तथैव सर्वं सम्पादितमिति--

विज्ञापयति श्रीभागवताचार्यप्रियः

श्रीभागवतभूषणः श्रीवृन्दावनधामा

श्रीकेशवशरणदेवनामा।

---

# सङ्क्षिप्तराममचरितम्।

श्रीजनकनन्दिनीसमेतश्रीरघुनन्दनपरब्रह्मणे नमः।

श्रीमान् वेङ्कटनाथार्यः—

" जयत्याश्रितसन्त्रास-ध्वान्तविध्वंसनोदयः।
प्रभावान्सीतया देव्या परमव्योमभास्करः॥
चतुर्मुखेश्वरमुखैः पुत्रपौत्रादिशालिने।
नमः सीतासमेताय रामाय गृहमेधिने"॥

श्रीवेङ्कटाध्वरी—

काकुत्स्थकुलपर्याय-कलशार्णवकौस्तुभः।
कौसल्यासुकृतव्रात-कल्पकप्रसवोदयः॥
मौढपङ्क्ति रथागार-परिष्कारहरिन्मणिः।
जानकीलोचनद्वन्द्व-चकोरानन्दचन्द्रमाः॥
संसारमार्गसचार-श्रान्तच्छायामहीरुहः।
सर्वपातकवेताल-समुच्चाटनमान्त्रिकः॥
करुणारसकल्लोल-पीयूषवरुणालयः।
तपोधनजनाकाङ्क्षा-तटाकावनतोयदः॥

विद्याविहरणोद्यानं विनयास्थानमण्डपः ।
सौलभ्यप्राभवोत्कर्ष-समावेशनिवेशनम् ॥
सौजन्यवादान्यकयोः सामानाधिकरण्यभूः ।
सौमुख्यमुख्यभवनं सौहार्दैकवितर्दिका ॥
अद्भुतोत्साहशक्तीना-मसाधारणजीविका ।
प्रसादलक्ष्म्याः प्रासादः प्रसादस्य परा गतिः ॥
प्राणप्रतिष्ठा क्लिष्टानां प्रपन्नानां परायणम् ।
अनपायसमृद्धीना-मवगाहनदीर्घिका ॥
जम्भशासनजीवातु-र्जन्मगेहं जयश्रियः ।
दुर्वारघोरदारिद्र्य-दर्वीकरखगेश्वरः ॥
तत्तादृक्ताटकादेह-ध्वान्तराजीवबान्धवः ।
सुबाहुमत्तमातङ्ग-संहारवरकेसरी ॥
भार्गवाग्रहदावाग्नि-परिवर्जननिर्झरः ।
विराधाख्यदुरातङ्क-विद्रावणमहौषधम् ॥
खरदूषणकिम्पाक-खण्डनैकपरश्वधः ।
दुर्मोचनीचमारीच-कीचकप्रबलानलः ॥
गृध्रराजस्य नाकादि-लोकाक्रमणवर्त्तिनी ।
कबन्धमयकासार-कबलीकरणातपः ॥
शबरीचित्तकह्लार-शारदज्योत्स्निकोदयः ।
पावमानियशःकाश-प्रकाशशारदागमः ॥
प्रगल्भवालिजीमूत-प्रोत्सारणसमीरणः ।
सुग्रीवराज्यसामग्री सुदिनं काननौकसाम् ॥
दुर्निरोधधुनीनाथ-जाड्यरोगचिकित्सकः ।
दुष्टनक्तञ्चरस्तोम-धूमकेतुविजृम्भणम् ॥
कुम्भकर्णमदाम्भोधि-स्तम्भने कुम्भसम्भवः
बलीयोरावणप्राण-पाषाणदलनाशनिः ॥
विभीषणस्य साम्राज्य-विश्राणनसुरद्रुमः ।
अयोध्यापुरनारीणा-मक्ष्णोरत्यद्भुतोत्सवः ॥
अभिषिक्तो यथावच्च वसिष्ठाद्यैर्महर्षिभिः ।
रमते मम तेजस्वी रामः कामसमो हृदि " ॥ इति ।

॥ श्रियै नमः ॥

# दुर्ज्जनमुखभङ्गचपेटिका।

श्रीमते रामानुजाय नमः।

श्रीमद्बोधायनादिपूर्वाचार्य्येभ्यो नमो नमः।
श्रियः कान्ताय नमः। श्रीमते विष्वक्सेनाय नमः।
श्रीमते पराङ्कुशमुनये नमः। श्रीमते वरवरमुनये नमः॥

श्रीमद्भाष्यविभाकरः स जयति स्वोद्भूतिविद्रावित-
ध्वान्तस्त्रासितबाह्यघूकनिकरो गर्ज्जच्छुकादिद्विजः॥

---

योऽयोध्यामधितिष्ठन्नसुरत्राणाद्दषीनमोमोचीत्॥
सीताभिराममूर्त्तिः पायादधुनाऽपि नः सदाऽपायात्॥१॥

शरद्राकाचन्द्रः श्रुतिनिकरसिन्धोस्तनुभृतां
कलिग्रीष्मार्त्तानाममृतरसवर्षी जलधरः॥
कुदृष्टीनां दृष्टिप्रसरणहरः कोऽपि मिहिरः
कृपापीयूषाब्धिर्जयति भगवान् यामुनमुनिः॥२॥

तस्मै रामानुजार्य्याय नमः परमयोगिने॥
यः श्रुतिस्मृतिसूत्राणा-मन्तर्ज्वरमशीशमत्॥३॥

प्रमाणानि प्रमेयश्च प्रमातारश्च सात्विकाः॥
जयन्ति क्षपितानिष्ट-मेतन्मिथ्याप्रलापिनः॥४॥

साधुवृन्दावनं कुर्व-न्निघ्नन्नासुरयूथपान्॥
सुदर्शनहस्तोऽन्यो जीयाद्रङ्गगुरुर्हरिः॥५॥

यत्सूक्तिप्रकरादशर्म्म विजहावज्ञानवन्निर्गुण –
भ्रान्तब्रह्मवदैस्त्रयी कमलिनी दोषाकरैः पीडिता ॥१॥

नास्ति बुद्धेरविषयो विषयः कोऽपि धीमताम् ॥
तथापि टिप्पणी काऽपि जिज्ञासुहितमावहेत ॥६॥

तत्रतावद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्त्तकाचार्यस्सर्वतन्त्रस्वतन्त्रः श्रीवृन्दावननिवासनिरतो वाधूलकुलकमलदिवाकरः श्रीमद्गोवर्द्धनरङ्गदाशिकः कस्यचिन्मूर्खशिरोमणेः कृतिरूपं वैष्णवनिन्दनबुद्धया सङ्कलितं श्रीवैष्णवमतप्रदीपनामकं ग्रन्थाभासं स्वनिबन्धेनन खण्डयन्नादौशिष्टाचारप्राप्तंबाह्यकुदृष्टिनिरसनपटीयोब्रह्ममीमांसासर्वस्वभूतश्रीभाष्यविषयकं मङ्गलमाचरन् श्रीभाष्यं विभाकरस्याऽनुभयाभेदरूपकेण रूपयति-श्रीमद्भाष्येति। अज्ञानवन्निर्गुणभ्रान्तब्रह्मवदैरिति अज्ञानवच्च तन्निर्गुणं तदेव भ्रान्तं तादृग् ब्रह्म वदन्ति। अत्राद्वैतिनोऽज्ञानाश्रयं निर्गुणं भ्रान्तं ब्रह्म वदन्ति। तथोक्तं तेषामेव ग्रन्थे यथा—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ॥
पूर्वसिद्धतमसो हि पाश्चिमो। नाश्रयो भवति नाऽपि गोचरः" ॥इति॥

अयमर्थः केवला निर्विभागचितिरेव केवलं जीवेश्वराविभागशून्यचैतन्यं परं ब्रह्मैव पूर्वसिद्धतमसो जीवादिविभागात्पूर्वविद्यमानस्याऽनाद्यविद्याख्यभावरूपाज्ञानस्य आश्रयत्वविषयत्वभागिनी आश्रयं विषयश्च भवति। पश्चिमोऽविद्याकल्पितोजीव ईश्वरो वा तादृशाज्ञानस्याऽश्रयो न, विषयोऽपि नेति। अतस्तेऽज्ञानवन्निर्गुणभ्रान्तब्रह्मवदास्तथाभूतैर्दोषाकरैश्चन्द्रमोभिः पीड़िता सङ्कुचिता त्रयी ऋग्यजुस्सामरूपा अवयवा यस्याः सा त्रय्येव कमलिनी यस्य श्रीभाष्यस्य सूक्ति रेव प्रकृष्टः करः किरणस्तस्मात् प्रकरादिति जात्येकवचनं किरणेभ्य इत्यर्थः। अशर्म्म सङ्कोचरूपमसुखं विजहावुज्झाञ्चकार सः विद्वल्लोकप्रसिद्धः स्वस्योद्भूत्या प्राकट्येन विद्रावितोऽज्ञानरूपं ध्वान्तमन्धकारो येन त्रासिता बाह्या एवार्थदर्शनेऽन्धत्वादघूकास्तेषां निकरस्समूहो येन गर्जन्तः शुकादयो द्विजा यस्मात यदुदये शुकादिपक्षिणां शब्दश्रवणाद्बाह्यौ तद्रवाभावादिति भावः। इति-

चक्रपाणिद्वेषदोष—दूषिताखिलमानसः ॥
वाराणस्यां कश्चिदस्ति नरो मूर्खशिरोमणिः ॥२॥

विभाकरपक्षे। श्रीभाष्यपक्षे तु शुकादिमुनिवचनानां प्रमाणरूपेणोपन्यासात गर्जन्तः शुकादयो मुनय एव द्विजाः पक्षिणो यस्मिंस्तथाभूतः श्रीमद्भाष्यमेव विभाकरः सूर्यो जयत्यभिभवति, स्वप्रतिकूलवादिन आसुरानिति शेषः। जि अभिभव इति धातोः। यथा सूर्यो नित्यं मन्देहनाम्नोराक्षसान् मन्दा ईहा चेष्टा येषां तांस्तथाभूतान्स्वाधीनाभभाजः करोति। तथा श्रीमद्भाष्यविभाकरोऽपि नित्यमेतान्मन्देहान्कृत्वाऽभिभवति। यद्वा जयति सर्वोत्कर्षेण वर्त्तते। जि जये इति धातोः। स्वप्रतिपाद्यबोधनेऽलं प्रभवतीत्यर्थः ॥१॥

चक्रपाणेस्तन्नाम्नः पुरुषस्य यो द्वेषः स एव दोषस्तेन दूषितमखिलं मानसं यस्य स मूर्खशिरोमणिः कश्चिदनिर्दिष्टनामा नरो वाराणस्यां काश्यामस्तीत्यन्वयः। अत्र केचिच्चक्रपाणिमेव श्रीवैष्णवमतप्रदीपकारं मन्वते। परन्तु न स कथञ्चिदपि ग्रन्थाभासस्याऽपि निर्माणे समर्थः, किन्तु केवलं वैष्णवद्वेष्टैवासीत। श्रीवैष्णवमतप्रदीपकृत्तु काशीनिवासी कश्चिदविपश्चिदन्य एवाऽनिर्दिष्टनामा मूर्खशिरोमणिश्चक्रपाणेर्मित्रमभूत्। तस्य मूर्खशिरोमणित्वन्तु अन्यनिष्ठद्वेषदोषेण स्वमानसस्य दूषितत्वादिति। अस्मिन्विषये तत्कृतश्रीवैष्णवमतप्रदीपादिमभाग एवाऽऽनुपूर्व्योपन्यस्यते तथाहि —

( श्रीवैष्णवमतप्रदीपः।

जयति श्रौतधर्मार्कः स्मार्त्तधर्मारुणोदयः।
सत्पुराणैरुह्यमानः पाखण्डध्वान्तनाशकः ॥

नत्वोपाध्यायपादाब्ज-मज्ञानध्वान्तभास्करम्।
सम्यक् श्रीवैष्णवमत-प्रदीपं ज्वलयाम्यहम् ॥

यदालोकमवालोक्य साधवस्तन्मतान्तरात्।
अनायासेन चिन्वन्तु तत्त्वं (×) परमदुर्लभम् ॥

अद्य पञ्चदशाब्दातीतकाले श्रीवैष्णवानामस्मिन्देशे सकलमतवादिषु प्राधीतन्यायवेदान्तशालित्वेन अनालोचितश्रुतिस्मृतिपुराणाः पण्डिता

× केश्चित्परिष्कृतामीति ग्रन्थतस्करपाठः।

अभूद्वृन्दावने कश्चिद्बद्धिपातसर्कषणाभिधः ॥
यस्याभून्मदिरातीर्थे यवनी च कुलाङ्गना ॥३॥
सोऽस्य धर्मप्रवक्ताभू-दाचार्य्यः पूज्यपादुकः।
गुरुपत्नी तु यवनी तथा सब्रह्मचारिणी ॥ ४ ॥
तदुक्तधर्मालम्बी सं-श्चिरकालानपायिनः।
बोधायनादिसिद्धातान्-वेदकान्दूषयत्यसौ ॥ ५ ॥

अपि बहिराचाराभासविचित्राचरणं दृष्ट्वा श्रद्दधते स्म मतं ते च स्वीय-धर्मग्रन्थान् पञ्चसंस्कारपञ्चीकरणमन्तरा कं कदाचिदपि न ददति परन्तु श्रीचक्रपाणिवर्णी श्रुतिस्मृत्याद्यखिलदर्शननिष्णातमती रामानुज-कूटमध्यप्रदेशे गोपेश्वरान्तिकेऽपि बाबूराधामोहनस्य निष्कुटे वृंदावने तन्मतग्रन्थान्सुहृत्त्वादादाय्यतोऽनेकैरुपायैर्निभृतमवलोक्याऽनृताध्वपात्य-मानोत्तमदेशीयजनोद्धरणधर्मलिप्सुस्तदातनविद्वुषस्तन्मूलोद्घोषणाय प्रोत्साहयामास स्वयश्च षोडशभिः प्रश्नैर्महान्तमपि द्राविडमनन्ता-चारिनामानं सर्व्वाडम्बरधारिणं जीरस्वन्ञ्जकश्च काश्यां महतीषु संसत्सु प्रत्यावर्त्तयाश्चक्रे।

वर्षाण्यपि दिवं याते भ्रान्तासिभ्रमदर्शिनाम्।
चिरादस्य प्रकाशाय तन्निमित्रमहमुत्सहे ॥)

इत्यादिरेव खलु प्राचीनश्रीवैष्णवमतप्रदीपपाठः। अधुना तु मूर्खेषु स्वीयपाण्डित्यप्रख्यापयितुकामेन रागद्वेषपूरितहृदयेन केनचिन्म-स्करिवेषधारिणा ग्रन्थतस्करेणामुं प्राचीनपाठं दूरीकृत्य तत्स्थाने सन्यासिब्रह्मचारिप्रभृतीनामपि निन्दया पूरितमेकपृष्ठमात्रमति-कुत्सितं वितण्डामण्डितश्च नूतनपाठं निवेश्य स्वरचितत्वेन प्रसिद्धी-कृत्य मुद्रापितोऽस्तीतीमां तस्य केवलं कालिकालिकमहाप्रामाणिकता-मेवाऽव गच्छन्तु महाभागाः ॥२॥

तद्गुरुं निर्दिशति—अभूदिति ॥ ३ ॥

अस्य मूर्खशिरोमणेर्नरस्य, नरमुपहसति—गुरुपत्नीति। सब्रह्म-चारिणी सतीर्थ्येति ( परिहासः ) भावः ॥ ४ ॥

चिरकालादनपायिनोऽपायरहितान् वेदव्यासप्रशिष्यप्रवरबोधाय-नादीनां सिद्धान्तान् ॥ ५ ॥

केचित्कलिमलाक्रान्त-मानसाः पण्डिताभिधाः।
तदीयाम्बुधिघोषेषु वितन्वन्तीह सम्मतिम् ॥ ६ ॥

निरक्षरोदरत्वेन नायमर्हति लक्ष्यताम्।
तस्मात्तत्सम्मतिकृतो जनान्प्रतियतामहे ॥ ७ ॥

तत्र तावदिदानीं बहवो मुग्धा जना इत्यारभ्य स च मार्गः श्रुतिस्मृत्यादिमूलविधुरोऽत्यन्तनीचजात्युद्भूत पुरुष प्रवर्त्तित इति प्रतिज्ञाय सर्वग्रन्थेन तदुपपादितम्।

तत्रादौ इदानीं बहवो मुग्धा जना रामानुजीयानां दम्भमत्या-चारश्चाऽवलोक्य तैर्विप्रलब्धास्सन्तः शास्त्रसम्मतं स्वकुलधर्ममपहाय तन्मार्गे प्रविशन्तीत्युक्तम्।

तत्रत्यात्याचारस्य इत्थन्त्वेनाऽनिरूपणात् मनुस्मृतौ द्वितीयाध्या-यीयषड्विंशतितमश्लोकाद्युक्तवैदिकसंस्कारानुष्ठानमेव स्वस्वदेशेरनुष्ठीयमानमत्याचारतयाऽवगतं स्यात् यथा—

"वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च।

गार्भैर्होमैर्जातकर्म-चौलमौञ्जीनिबन्धनैः।
वैदिकं गार्भिकश्चैनो द्विजानामपमृज्यते" ॥

इति श्लोकाभ्यां निषेकपुंसवनसीमन्तजातकर्मादयः कार्या इति ह्युक्तम्। अत्र मुक्तावली ये गर्भशुद्धये क्रियन्ते ते गार्भाः होमग्रहण-मुपलक्षणं गर्भाधानादेरहोमरूपत्वादिति। अत्र हि बहुवचनेनाऽऽदि-शब्देन च परिशेषात्पुंसवनसीमन्ते गृह्येते एवमुपनयनादेरपि तत्तत्का-लेषु कर्त्तव्यत्वमग्रिमग्रन्थेनोच्यते अतस्तदतिरिक्तात्याचारादर्शनादु-क्ताभिप्रायेणैवेदं लिखितमिति गम्यते एतदाचारस्यात्याचारत्वभ्रमेण दम्भेऽनुमीयमानेऽपि न तदनुष्ठातॄणां काचन क्षतिः।

---

तदीयाम्बुधिघोषेषु तत्प्रयुक्तनिरर्थकशब्देष्वित्यर्थः ॥ ६ ॥

निरक्षरोदरत्वेन मूर्खत्वेन हेतुना नाऽसौ लक्ष्य इति भावः ॥ ७ ॥

यद्यवैष्णवैरननुष्ठीयमानं वैष्णवानामनुष्ठेयतया (क) शास्त्रैर्विधीयमानमेकान्तभगवदर्थपाकभगवदनिवेदितान्नाभोजनश्वपाकादिदृष्टाभोजनप्रमुखमत्याचारतयाभिप्रेतं तर्हि शूद्राद्यननुष्ठीयमानवर्णाश्रमधर्मादिकमपि ब्राह्मणैरनुष्ठीयमानमत्याचारः स्यात् उक्तवैष्णवधर्मप्रमाणश्च(ख) पश्चरात्रादिकं तत्र च कल्पितत्वेनाऽप्रामाण्यं वक्ष्यत इति चेत् तत्रैव तव भ्रममुपपादयिष्यामः ।

(क)शास्त्रैर्विधीयमानमिति तथोक्तं पाराशरे धर्मशास्त्रे "देवतान्तरभक्तानां दृष्टिदोषं परित्यजेत्। नैवेद्यपाककाले च भोजने च विशेषतः" हयशीर्षपश्चरात्रे "नत्वेवाऽपूज्य भुञ्जीत भगवन्तं जनार्द्दनम्। न तत्स्वयं समश्नीयादूयद्विष्णोर्न निवेदयेत्" कौर्मे च "अनर्पयित्वा गोविन्दं यैर्भुक्तं धर्मवर्जितैः। श्वानविष्ठासमश्चान्नं नीरश्च सुरया समम्" पुनः पाराशरे "चाण्डालाः शाक्तिकाः शैवास्तथा भैरवपूजकाः। येऽप्यन्यदेवताभक्तास्तेषां दृष्टिं विवर्जयेत्" न चात्र चाण्डालशाक्तशैवानामेकवचनेनोपादानं कथम्? इति शङ्क्यम्—यतो मतान्तरे परमपावनत्वेन परिगणितस्याऽपि भस्मनो विष्णुपुराणे केशास्थिकणकामेध्यादिभिः सह पाठदर्शनात्—तथाहि तृतीयेंशे "केशास्थिकणकामेध्य-बलिभस्मतुषांस्तथा। स्नानार्द्रधरणीश्चैव दूरतः परिवर्ज्जयेत्" इति। शाण्डिल्यस्मृतावपि" नाश्नीयाच्छयनारूढो नादीपे निहितं पुनः। न दृष्ट्वा केशकीटाद्यं न चावैष्णवदर्शने" इत्यादिकमत्र बहुतरमनुसन्धेयं विस्तरभयान्न लिख्यते। परमिदं विशेषशास्त्रवचनजातं विशेषाधिकारिणामेव। सामान्याधिकारिणामपि मनुना तृतीयेऽध्याये नित्ये दैवे नैमित्तिके पित्र्ये वा कर्मणि चाण्डालादिदृष्टिदोषो निषिध्यते तथाहि—"चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च। रजस्वला च षण्ढश्च नेक्षेरन्नश्नतोद्विजान्॥ होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते दैवे कर्मणि पित्र्ये वा तद्गच्छत्ययथातथम्" इति। किन्तु ये खलास्ते स्वयन्नाचरन्ति आचरतो वैष्णवानपि दृष्ट्वा प्रद्विषन्तस्तेषां दम्भमत्याचारश्च वदन्ति तत्र कस्याऽपराध इति स्वयन्निश्चिन्वन्तु विपश्चितः। (ख) पश्चरात्रादिकमिति आदिशब्देन पूर्व्वोक्त-सात्विकधर्मशास्त्रपुराणादिपरिग्रहः।

(ग)यदपि स च मार्गः श्रुतिस्मृत्यादिमूलविधुरोऽत्यन्तनीचजात्युद्भूतपुरुषप्रवर्त्तित इति।[घ]तत्र मार्गस्य श्रुतिस्मृत्यादिमूलवैधुर्य्यञ्च श्रुतिस्मृत्यप्रतिपाद्यत्वे पर्यवस्यति भगवत्पारम्यं वर्णाश्रमधर्म्मानुष्ठानपूर्वकभक्तिपरिग्रहः तापादिपञ्चसंस्काराः भगवदाराधनस्य नित्यवत्कर्तव्यत्वं तन्निवेदितान्नभोजनं निषिद्धत्यागो भगवदनन्यता राजसतामसदेवताभ्यः फलाभाव इत्यादिस्वमतसिद्धार्थानां श्रुतिस्मृतिप्रतिपाद्यत्वस्य स्वावसरे निरूप्यमाणत्वात (ङ) आद्यो हेतुरसिद्धः।

नीचजात्युद्भूतपुरुषप्रवर्त्तित इत्यत्र[च]प्रवर्त्तकत्वं किं पूर्व्वमविद्यमानस्य स्वयं कल्पनम् उत विद्यमानस्यैव मतस्य परिग्रहमात्रम् अथवा स्थित एव मते तदुपयुक्ताविदितार्थप्रतिपादनम् यद्वा तिरोहितस्य मतस्य प्रकाशनम् (छ) नाद्यः द्वापरे स्थितस्य शठकोपात्प्राचीनस्य भक्तिसारस्याऽप्येतन्मतप्रविष्टत्वस्य त्वयैवोपपादिततया पूर्व्वमविद्यमानत्वायोगात भक्तिसारस्य शठकोपात्प्राचीनत्वे किं मानमिति चेच्छठकोपस्यान्तिमवर्णत्वे वा किं मानं त्वदीयोक्तिरिति चेदत्रापि तामेव गृहाण ।

---

(ग) अथ श्रीसम्प्रदायप्रविष्टानां वर्णाश्रमाधिकारच्युतत्वसाधकं प्रतिपक्षानुमानं दूषयितुमुपन्यस्यति—यदपि स चेति ।

[घ]अनुमाने प्रथमहेतोः स्वरूपासिद्धिं प्रतिपादयितुमुपक्रमते–तत्रेति।

(ङ)आद्यो हेतुरसिद्ध इति स्वरूपासिद्ध इत्यर्थः। एवं खलु तदीयानुमानप्रयोगः सम्पद्यते तथाहि—श्रीसम्प्रदायमार्गो वर्णाश्रमाधिकारध्वंसवान् श्रुतिस्मृत्यादिमूलविधुरत्वात अत्यन्तनीचजात्युद्भूतपुरुषप्रवर्त्तितत्वाच्चेति अत्र श्रीसम्प्रदायमार्गं पक्षीकृत्य वर्णाश्रमाधिकारध्वंसः साध्यते श्रुतीत्यादिहेतुद्वयेन प्रकृते साध्यतावच्छेदकसम्बन्धस्तु परम्परात्मकः स च स्वप्रतियोग्याश्रयानुयोगिकसम्बधप्रतियोगित्वरूपः अनेनैव सम्बन्धेन प्रतिपक्षिणा वर्णाश्रमाधिकारध्वंसरूपं साध्यं क्रियाध्यवसायोभयात्मके मार्गे समानेयं तथाच मार्गे श्रुतिस्मृत्यादिप्रतिपाद्यत्वरूपश्रुतिस्मृत्यादिमूलकत्वसत्त्वात्तद्वैधुर्यरूपहेतोः पक्षवृत्तित्वाभावादाद्यो हेतुः स्वरूपासिद्ध इति भावः।

(च) द्वितीयहेतोरसिद्धिं ज्ञापयितुं प्रवर्त्तकत्वं चतुर्धा निर्वक्ति—प्रवर्त्तकत्वं किमिति। (छ) प्रथमकल्पं निषेधति—नाद्य इति ।

किञ्च ब्रह्मविद्यापरमाचार्य्यबादरायणस्य साक्षात्प्रशिष्येण बोधायनेन टङ्कद्रमिडकुहदेवभारुचिब्रह्मानन्दिप्रभृतिप्राचीनतराचार्य्यैः परमर्षिप्रसूतैश्च परिगृहीतस्याऽस्य मतस्य कालिकालिकशठकोपप्रवर्त्तितत्वं वदतामनुमन्वानानाञ्च परमपुण्यक्षेत्रभूतवाराणसीनिवासिनाञ् जिह्वा किं न विदीर्य्यते द्वितीये त्विष्टापत्तिः[ज]न तावता त्वदभिमत साध्यसिद्धिः स्त्रीशूद्रपरिगृहीतनामसङ्कीर्त्तनाख्यभक्तेः ब्राह्मणेनाप्युपादेयतया (झ) व्यभिचारात् (ञ) अत एव न तृतीयः नैतावतापि साध्यसिद्धिः धृतराष्ट्रशौनकादिमहर्ष्यैविदितैर्विदुरसूतधर्मव्याधाद्युपदिष्टैरर्थैर्युक्तस्य मतस्य परिग्राह्यत्वेन व्यभिचारात (ट) न चतुर्थः शठकोपात्प्राक् तस्याऽतिरोहितत्वात् अतिरोधाने च मानम् त्वदुदाहरिष्यमाणकाव्यवचनमेव तत्र शठकोपपितृपितामहादेर्भागवताग्रणीत्वस्योक्तत्वात तच्छलोकस्य शठकोपान्तिमवर्णत्वे प्रमाणतया त्वयैवोपादानेन तत्पितृपितामहादीनाम् भागवतत्वेऽपि ( ठ ) तत्प्रामाण्यस्याऽव्याहतत्वात ( ड ) अन्यथा शठकोपस्याप्यन्तिमत्वर्णत्वस्याऽप्रामाणिकतया ( ढ ) उक्तहेत्वसिद्धेः ।

---

( ज ) द्वितीयकल्पे स्वस्येष्टापत्तावपि प्रतिपक्षिणो व्यभिचारं दर्शयति-नेति । तावता प्रवर्त्तकत्वस्य विद्यमानपरिग्रहमात्रत्वस्वीकारेण ।

(झ)व्यभिचारादिति प्रवर्त्तकत्वस्य विद्यमानपरिग्रहमात्रत्वे स्त्रीशूद्रपरिगृहीतनामसङ्कीर्त्तनाख्यभक्तेः स्त्रीशूद्रप्रवार्त्तितत्वापतेरित्यर्थः ।

(ञ)तृतीयकल्पं निषेधति–अत एवेति। व्यभिचारादेवेत्यर्थः। एतावतापि प्रवर्त्तकत्वस्य स्थित एव मते तदुपक्ताविदितार्थप्रतिपादनरूपत्वस्वीकारेणाऽपि तवाऽभिमतस्य वर्णाश्रमाधिकारच्युतिरूपसाध्यस्यसिद्धिर्न, न हि धृतराष्ट्रः शौनकादिमहर्षयश्च विदुरसूतधर्मव्याधादिभ्य उपयुक्ताविदितार्थप्रतिपादनं श्रुत्वा वर्णाश्रमाधिकाराच्च्युता अभूवन् नाऽपि तदुपयुक्ताविदितार्थप्रतिपदानेन विदुरसूतधर्मव्याधादीनां तन्मतप्रवर्त्तकत्वमिति ।

( ट ) तुरीयमपि कल्पं निषेधति--न चतुर्थ इति ।

( ठ ) तत्प्रामाण्यस्य तादृशकाव्यवचनप्रामाण्यस्य ।

( ड ) अन्यथा तादृशकाव्यवचनप्रामाण्याभावे ( ढ ) उक्तहेत्वसिद्धेः। नीचजात्युद्भूतपुरुषप्रवर्त्तितत्वरूपाद्वितीयहेत्वसिद्धेरित्यर्थः

यदपि तेषामेव ग्रन्थ इत्यादिना पञ्चोखञ्जकशूद्रस्य वंशे जातः शठकोप इत्यन्तेनोपपादितं तत्तु सम्प्रतिपन्नमेव तन्मूलकदोषोद्भावनन्तु स्वस्य श्रुतिस्मृतिवृत्तान्तानभिज्ञत्वं द्योतयतीत्युपपादयिष्यते। स च रामानुजीयमार्गस्य प्रथमप्रवर्त्तक आद्याचार्य इति तु ततोऽपि प्राचीनानां बोधायनादीनां प्रदर्शितत्वात्प्राथम्याऽसिद्ध्या निरस्तम्।

यत्तु तथाहीत्यादिना गुरुपरम्पराश्लोकं सार्थमुपन्यस्य अयमेवाऽस्य मार्गस्य मनुष्येषु प्रथमप्रवर्त्तक इत्यस्मादेव श्लोकान्निश्चीयते इत्युक्तम्। तत्र मनुष्येषु प्रथमप्रवर्त्तकत्वं बोधायनभक्तिसारादिप्रदर्शनादेव निरस्तम् (ण) तर्हि गुरुपरम्परायामस्यान्वयः कथमिति चेत्? रामानुजादिपञ्चसंस्कारप्रापकपरम्पराघटकस्य स्वपित्रा कृतसंस्कारस्य (त) शठकोपोत्पत्तेरनन्तरं साग्रत्रिसहस्राब्दानन्तरभाविनस्तदीयार्च्चोपास-

---

तथा च द्वितीयहेतोः स्वरूपासिद्धिवारणाय तत्काण्ववचने त्वयाऽपि प्रमाणत्वेन शरणीकरणीये तत्प्रामाण्येनाऽगत्यैव शठकोपपितृपितामहादीनां भागवताग्रणीत्वं त्वयापि स्वीकरणीयमेव, एवञ्च शठकोपात्पूर्वं मतस्य तिरोहितत्वाभावान्न तिरोहितस्य प्रकाशनरूपमपि प्रवर्त्तकत्वं शठकोपस्य सिद्ध्यतीति द्वितीयोऽपि हेतुः स्वरूपासिद्धः।

(ण) वाद्यभिप्रायेण शङ्कते—तर्हीति। समाधत्ते—रामानुजादीति। रामानुजादिपञ्चसंस्कारप्रापकपरम्पराघटकस्येत्यादीनि चत्वारि नाथमुनेर्विशेषणानि।

(त) शठकोपोत्पत्तेरिति एवं हि शठकोपस्य नाथमुनेश्चोत्पत्तिकालपौर्वापर्यं तच्चरितादवगम्यते—

यथा—"ततो वक्ष्ये प्रमाथ्यब्दे आदौ कलियुगस्य च।
एकमासे गते तत्र त्रयोदशादिनोत्तरे॥
वैशाखे शुक्लपक्षे च चतुर्दश्यां भृगोर्दिने।
सञ्जज्ञे नाथनायिक्यां शठकोपो महामतिः"॥ इति॥

नाथमुनेरपि—

"द्विशते च त्रिसाहस्रे चतुर्विंशतिना युते।
कलौ युगे गतेऽब्दानां शोभकृन्नामके ततः॥
संवत्सरे ज्येष्ठमासे राकायां मित्रभे बुधे।
जातो नाथमुनिस्तस्य विप्रस्य सुमहायशाः"॥ इति॥

कस्य नाथमुनेर्मुक्तदशायाम् (थ)अलक्षितेनैव तेन सकलसाम्प्रदायिका-विदितार्थप्रदानादिति गृहाण ।

(द)अथ स्यात् तत्कालेऽन्येपि साम्प्रदायिकाः सन्त्युत न सन्ति आद्ये अर्च्चोपासनादिपरिश्रमपूर्वकं शठकोपमेवाऽप्रत्याक्षितं नाथमुनिः किमर्थं परिचचार ? अन्येभ्य एव तदर्थग्रहणसम्भवात् द्वितीये तु शठकोपकृतमेवेदं मतमिति निश्चीयत इति ।

(ध) स्यादेवं यदि वर्णाश्रमप्रवराग्रगण्येषु वसिष्ठभृगुभरद्वाजादिषु सत्स्वपि जातितः स्वापेक्षयाऽत्यन्तनिहीनं पितृशुश्रूषयाऽन्यपरमपि धर्मव्याधं महर्षयो न परिचेरुः (न)परिचेरुश्च ते ।

तथा चारण्यपर्वणि धर्मव्याधवृत्तान्ते—

(प) "कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः ।
तपस्वी धर्मशीलश्च कौशिको नाम भारत !" ॥

इत्यारभ्य—

"अतिक्रमन्नरण्यानि ग्रामांश्च नगराणि च ।
ततो जगाम मिथिलाम्" ॥

इति बहुदूरदेशात्तस्य मिथिलागमनमुक्त्वा—

"धर्मव्याधमपृच्छत्स स चाऽस्य कथितो द्विजैः ।
अपश्यत्तत्र गत्वाऽन्तः सूनामध्ये व्यवस्थितम् ।

---

(थ) अलक्षितेनैव अप्रत्यक्षितेनैव तेनार्चामूर्त्तिना शठकोपेन जवनिकान्तरितेनेति भावः ।

(द) बाह्यभिप्रायेण मतस्य शठकोपकृतत्वं पर्यवसाययितुं शङ्कते—अथ स्यादित्यादिना ।

(ध) अनुरूपप्रतिबन्द्योत्तरयति—स्यादेवमिति । यदि महत्सु सत्सु निहीनं धर्मव्याधं महर्षयो न परिचेरुस्तर्ह्येवं स्यात् ।

(न) परिचेरुश्च ते । ते महर्षयः स्वापेक्षया जातितोऽत्यन्तनिहीनमपि धर्मव्याधं परिचेरुः ।

(प) धर्मव्याधविषये कौशिकमहर्षिकृतां परिचर्यामेव दर्शयति—कश्चिदित्यादिना प्रस्थितो द्विजसत्तम इत्यन्तम् ।

मार्गमाहिषमांसानि विक्रीणन्तं तपस्विनम्।
आकुलत्वाच्च क्रेतॄणामेकान्ते संस्थितो द्विजः" ॥

इत्यन्यपरस्य तस्याऽवसरप्रतीक्षणमुक्त्वा–

"नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे"।

इति व्याधस्य ब्रह्मोपदेष्टृत्वमुक्त्वा—

"प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः"।

(फ) इति कौशिकेन व्याधे परिचर्य्या कृतेत्युक्तम्।

तथा भागवते चोपक्रमे—

(ब) "त एकदा तु मुनयः प्रातर्हुतहुताग्नयः।
सत्कृतं सूतमासीनं पपृच्छुरिदमादरात्" ॥

इति सूतस्यर्षिभिस्सत्कारमुक्त्वा—

"त्वन्नः सन्दर्शितो धात्रा दुस्तरं निस्तितीर्षताम्।
कलिं सत्त्वहरं पुंसां कर्णधार इवार्णवम्" ॥

(फ) इतीति– कौशिकेन धर्मव्याधे इति परिचर्या कृता– तथा हि वेदाध्यायिनस्तपोधनस्य द्विजातिप्रवरस्य कौशिकस्य बहुदूरदेशादरण्याद्यतिक्रमणपूर्वकं मिथिलागमनं तत्र तस्य धर्मव्याधविषयकः प्रश्नः ततो द्विजवाक्यात्सूनागृहगमनं तत्र मांसविक्रेतुर्धर्मव्याधस्य दर्शनं ततस्तस्याऽवकाशाभावादवसरप्रतीक्षणं ततो ब्रह्मविद्याग्रहणानन्तरं प्रदाक्षिण्यं कृत्वा स्वस्थानप्रस्थानमित्येवं परिचर्या कृतेत्यर्थः।

इदमत्र विचारयन्तु विपश्चितः यन्मांसविक्रयकारिणो व्याधादुपदेशं गृहीतवतः कौशिकमहर्षेर्नीचजातीयत्वन्नैवाऽभूत किन्तु जन्मारभ्यानवरतपरमात्मतत्त्वनिरतस्य शठकोपस्य पश्चात्साग्रत्रिसहस्राब्दानन्तरं जातेन नाथमुनिना द्रोणाचार्यस्यैकलव्येनेव प्रतिमास्थापनपुरस्सरं भक्तिः कृता तया भक्त्या एकलव्यस्य धनुर्विद्येव नाथमुनेरपि ब्रह्मविद्या प्राप्तेति मुक्तदशायामलक्षिताच्छठकोपादुपदेशं प्राप्य नाथमुनिर्नीचो जातस्तदीयशिष्याः सर्वे श्रीसम्प्रदायिनश्च नीचातिनीचाश्चाण्डालादप्यधमा जाता इति परा काष्ठा बुद्धिकौशलस्य मन्दमतेः।

(ब) अथ बहुभिर्महर्षिभिः कृतां सूतविषये परिचर्य्यां दर्शयति– त एकदा तु मुनय इति।

इति ऋषिभिः सूत उत्तारकत्वेन वृत इत्युक्तम्।

नन्वब्रह्मोपासने मुक्तदशायामलक्षितेनैवोपदेशे च किं मानमिति चेच्छठकोपस्यान्तिमवर्णत्वे यत्तदेवेत्यसकृदुक्तं मन्दमते! किं विस्मरासि एतेन वर्णाग्न्येण नाथमुनिना कथं हीनवर्णोपसत्तिः कृतेति शङ्का पराकृता धर्मव्याधवदुपपत्तेः, मुक्तदशायां नामरूपाद्विमुक्तस्य वर्णश्रमाभावाच्च। अत एव च तस्योपदेशाधिकारोऽपि समर्थितः इत्यश्चास्य श्लोकस्याऽर्थविशेषपरम्परापरतयाऽस्मादेव श्लोकान्निश्चीयत इत्युक्तिर्मूर्खजनमूर्द्धन्यस्य परमताऽपरिज्ञानं प्रकटयति।

(भ) यदप्यनन्तरश्चेत्यादिना सेनेशादयस्त्रयो देवास्तेषां चरित्रं चार्षग्रन्थसम्मतमेव प्रमाणं नान्येनोक्तमिति शठकोपान्तैवेयं परम्परेत्युक्तम् तदप्याऽऽर्षग्रन्थादर्शनं पिशुनयति आर्षग्रन्थेष्वेव लक्ष्मीनारायणयोर्विष्वक्सेनलक्ष्म्योश्चोपदेश्योपदेशकभावदर्शनात्—

तथाहि पद्मपुराणे ब्रह्माणं प्रति नारायणः स्वयमाह—

"पुरा मन्त्रं द्वयं ब्रह्मन्! विष्णुलोके महापुरे।
तस्मिन्नन्तःपुरे लक्ष्म्यै मया दत्तं सनातनम्"॥ इति

---

(भ) लक्ष्मीनारायणान्तायाः श्रीसम्प्रदायपरम्परायाः शठकोपान्तत्वमलाघं दूरीकर्तुं तदीयपूर्वपक्षग्रन्थमुपन्यस्यति—यदप्यनन्तरश्चेत्यादिनेति। अत्रेदमवधेयं यदयं प्रदीपकारः शास्त्रव्युत्पत्तावपरिपक्व इति तदीयलेखशैलीदर्शनेनैव विद्वद्भिरवगन्तुं शक्यते अतः सर्वत्र तल्लेखोपादानकाले समादधद्भिः श्रीरङ्गदेशिकैस्तदीयः पाठः परिष्कृत्यैवोपादायि न तावद्यथोल्लिखितस्तथैवेति। अत एव सेनेशादयस्त्रयो देवा इत्यादिरीत्या लिखितम्। अत्रैवं किल प्रदीपपाठः सेनेशो विष्वक्सेनः श्रीलक्ष्मीः नारायणश्चेत्यन्ते त्रयो देवास्तेषां चरित्रञ्चार्षसम्मतमेव नान्येनोक्तमिति शठकोपान्तैवेयं परम्परेति। अत्र च केनचिद् ग्रन्थचोरेण मूले श्येनेशं श्रियामिति पाठं विलिख्य विवरणेऽपि श्येनेशो विष्वक्सेन इति तालव्यशकारयकारघटितपाठो व्यलेख्यतस्तस्य पदावयवापरिज्ञानं क्रोधान्ध्यं वाऽनुमीयते। मूले श्रियामित्यस्य स्थाने प्रियमितिपाठस्तु अक्षरयोजनाकृतश्शोधयितुर्वा प्रमादेनेति सम्भाव्यते। पर

तथा विष्वक्सेनसंहितायाम्—

"अदादिमं मन्त्रराजं लक्ष्म्यै स पुरुषोत्तमः ।
साऽपि सेनाधिपतये कृपया परया ददौ" ॥

इति तदुभयमपि स्फुटमुक्तम् ।

यत्तु "परः पद्माभर्तुः" इत्यादिदिव्यसूरिप्रभावदीपिकाश्लोकमुपन्यस्य प्रथमपतिरिति मार्गस्य प्रथमप्रवर्त्तक इत्यर्थ इति व्याख्यातं तत्र च मार्गशब्देन किं (म) सिद्धान्तार्थसामान्यपरम्परा विवक्ष्यते उतार्थविशेषपरम्परा नाद्यः शठकोपात्पूर्वेषु बोधायनादिषु सिद्धान्तार्थदर्शनात् द्वितीयेऽपि किमर्थविशेषपरम्परासामान्यं विवक्षितम् उत तत्परम्पराविशेषः ? नाद्यः कासारमुनिप्रभृतिषु तद्दर्शनादेव । द्वितीये त्विष्टापत्तेः नाथमुनिप्रभृतीदानीन्तनप्रपन्नपर्यन्तचलितार्थविशेषपरम्परायां प्रथमप्रवर्त्तकत्वात् न तावता प्रपत्तिमार्गप्रथमप्रवर्त्तकत्वं तस्य—

---

मूले विवरणे चोभयत्र सेनेशस्थाने श्येनेश इति पाठस्तु ग्रन्थतस्कराज्ञानान्ध्यान्यतरमन्तरा न कथञ्चिदपि सम्भाव्यते । किञ्च० तेषाञ्चरित्रञ्चार्षसम्मतमेव प्रमाणं नान्येनोक्तम्' । इत्यत्र प्रथमान्त प्रमाणपदाघटितस्याकाङ्क्षाविरहितस्य तेषाञ्चरित्रञ्चार्षसम्मतमेव नान्येनोक्तमितिपाठस्योपन्यासाच्छाऽज्ञत्वसाधकानुमाने प्रदीपकादिव सोऽपि पक्षीभवति । यतस्तेषाञ्चरित्रञ्चार्षसम्मतमेव नान्येनोक्तमिति वाक्याच्छाब्दबोधजननेऽस्तीति तिङन्तपदमवश्यमेवाध्याहार्य्यम् 'एकतिङ्वाक्यम्' इति शास्त्रादेकतिङन्तघटितत्वस्याऽपि वाक्यलक्षणप्रविष्टत्वात् तथासति तेषां त्रयाणाञ्चरित्रञ्च आर्षसम्मतमेवास्ति अन्येनोक्तन्नास्तीत्यर्थो भविष्यति स च बाधित एव अनार्षस्याऽपि तेषाञ्चरित्रस्य बाहुल्यात् समग्रस्यैव जगतो नारायणगुणगायकत्वादिति भावः ।

( म ) सिद्धान्तो विशिष्टाद्वैतसिद्धान्तः तदीयार्थसामान्यं सर्वेऽर्थास्तेषाम्परम्परा मार्गशब्देन विवक्षिता उत अर्थविशेषा न्यासविद्यादिनैव भगवत्प्राप्त्यध्यवसायादयः कतिपयार्थास्तेषाम्परम्परा वेति विकल्पः तत्र । प्रथमपक्षं दूषयति—नाद्य इति । बोधायनीयशारीरकसूत्रवृत्तौ विशिष्टाद्वैतसिद्धान्तार्था दृश्यन्तेऽतो बोधायनादिषु सिद्धान्तार्थदर्शनं साधीयः । द्वितीयपक्षं विकल्पयति—द्वितीयेऽपीति । तत्राद्यं दूषयति—

(क)श्रुतिस्मृतिपञ्चरात्रसिद्धत्वात् स्वशिष्यान् प्रत्युपदेष्टृत्वमात्रेण प्रथमप्रवर्त्तकत्वे धर्मव्याधस्याऽपि तदुपदिष्टधर्मान्प्रतिप्रथमप्रवर्त्तकत्वप्रसङ्गः प्रातिशब्दोऽपि प्रातीतिव्युत्पत्त्या स्वशिष्यान्प्रत्यर्थविशेषोपदेशेन सिद्धान्तरक्षकत्वमेव ब्रूते न तु प्रवर्त्तकत्वम्।

यदप्यन्यावयववानिति अन्ये भक्तिसारादयो द्वादशावयवाः सन्ति यस्येति व्याख्यातं तदपि परमतापरिज्ञानात् न ह्यस्मन्मते शठकोपव्यतिरिक्ता द्वादश सूरयः स्वीक्रियन्ते अतो द्वादशेत्यज्ञानाल्लिखितम्। शठकोपव्यतिरिक्ताः सूरयस्तस्यावयववत्परतन्त्रा इति दिव्यसूरिप्रभावदीपिकायां लिखितं ततः पूर्विकाणां तेषां तत्पारतन्त्र्यञ्च तदनुसन्धानेन, ते हि काञ्चित्कालं संसारयात्रामनुकुर्वन्तः पश्चाद्भगवति लब्धभक्तिकाः जन्मप्रभृतिसंसारयात्राराहित्येन भगवदेकभक्ते शठकोपमुनौ स्वेषां पारतन्त्र्यमनुसन्दधिरे ॥

यत्तु तेषां तदवयवत्वमुक्त्वा भक्तिसारादयोऽपि नीचजातीया एवेत्युक्तं न तावता शठकोपस्य तदवयवकत्वेन कश्चिद्दोषः अवयवत्वस्य (ख) निरुक्तरूपत्वात् किञ्च भक्तिसारमुनिवाहनयोर्नीचजातीयत्वोक्तिरप्यज्ञानात् तयोस्तथात्वे प्रमाणाभावात् नच दिव्यसूरिचरित्रस्था विचक्षण इत्यादिश्लोकाः प्रमाणमित्युक्तमेवेति वाच्यम् ॥

"रोहिण्यां सौम्यवारे तु श्रीपाणौ निचुलापुरे।
कस्मिंश्चिद्ब्राह्मणक्षेत्रे व्रीहिगुच्छान्महायशाः ॥

नाथ इति। शठकोपात्प्राचीनानां कासारमुनिप्रभृतीनां दिव्यसूरीणां प्रबन्धेष्वात्मनो भगवदनन्यार्हशेषत्वादिरूपार्थविशेषदर्शनान्नार्थविशेषपरम्परासामान्यप्रवर्त्तकत्वं शठकोपस्य तेषां सूरीणामर्थविशेषपरम्परान्तर्गतत्वेऽपि शठकोपशिष्यत्वाभावात्।

(क) श्रुतिस्मृतिपञ्चरात्रेति। यथा हि श्रीभागवते दशमे (अ० ४७)
"भगवत्युत्तमश्लोके भवतीभिरनुत्तमा।
भक्तिः प्रवर्त्तिता दिष्ट्या मुनीनामपि दुर्लभा"

इत्युद्धववाक्याद्गोपीनां भक्तिमार्गप्रवर्त्तकत्वावगमेऽपि न भक्तिमार्गस्य नूतनत्वं नाऽपि गोपीनां प्रथमप्रवर्त्तकत्वं भक्तिमार्गस्याऽपि श्रुतिस्मृतिपञ्चरात्रादिसिद्धत्वात् तथा प्रपत्तिमार्गस्याऽपीति ज्ञेयम्।

(ख) निरुक्तरूपत्वात् तत्कृतपारतन्त्र्यानुसन्धानरूपत्वादित्यर्थः।

श्रीवत्सांशेन सञ्जज्ञे श्रीहरेराज्ञया तदा।
अयोनिसम्भवो जातो वेदान्तिन्मुनिवाहनः॥
पश्चात पञ्चमवर्णे तु ववृधे बालभावतः"।

इति मुनिवाहनस्याऽयोनिजत्वम्। तथा—

"तुलालग्ने भक्तिसारो मघायां गुरुवासरे।
कनकाङ्ग्यां भार्गवस्य जज्ञे चक्रांशतो महान्॥
रहितावयवां दृष्ट्वा पिण्डाकृतिमथाद्भुताम्।
कनकाङ्गी वने तत्र वेत्रवेण्वादिसङ्कुले॥
निकुञ्जे सहसोत्सृज्य ययौ स्वर्गं सुराङ्गना।
अतिहर्षात्समादाय भक्तिसारं महौजसम्॥
(ग) पत्न्याः पङ्कजवल्ल्याश्च वेत्रसम्पुटकारकः।
अनपत्यतया तस्या ददौ हस्ते समाहितः"॥

इति भक्तिसारस्याप्सरसि भार्गवजन्यत्वं तयोर्निहीनकुले वृद्धिमात्रञ्च सूच्यते न तु तयोर्निहीनयोनिजत्वमपि।

नच यो यत्कुले वर्द्धते स तत्कुलीन इति व्याप्तिः। तथासति कृष्णस्य गोपकुलवर्द्धितस्य गोपत्वापत्त्या तेन राजपुत्र्यां रुक्मिण्यां जातस्य प्रद्युम्नादेः प्रतिलोमजत्वापत्तेः। तथा कण्वमहर्षिवार्द्धितायां शकुन्तलायां राज्ञा दुष्यन्तेन जातस्य भरतस्य प्रतिलोमजत्वापत्तेश्च। विचक्षण इत्यादित्वदुदाहृतश्लोकेऽपि विधाय विक्रीय सूर्पं विचचारेति (घ) व्यापारमात्रं सूच्यते न तु तत्कुलजत्वमपि॥

एतेन "अत्र्यादिसूनुरिह वर्णयुगक्रमात्किमासीत्"इति "नेतुं द्राविडतां वेदानत्रैवर्णिकताङ्गतः" इति च दिव्यसूरिप्रभावदीपिकोदाहृतश्लोकावर्थेन सहोपन्यस्य अस्य तुरीयवर्णावलारोपि नाचार्यत्वभञ्जक इत्यादितद्ग्रन्थश्चोदाहृत्य शठकोपमुनेः शूद्रत्वसमर्थनञ्च व्यर्थम्। शूद्रम्प्रति नाथमुनेरुपसत्त्ययोगः

(ग) कनकाङ्ग्यां सुराङ्गनायां निकुञ्जे भक्तिसारमुत्सृज्य स्वर्गं गतायां वेत्रसम्पुटकारकः पङ्कजवल्लीनाम्न्याः स्वपत्न्या अनपत्यतया तस्या हस्ते समाहितः सन् भक्तिसारं ददौ।

(घ) व्यापारमात्रमिति तादृशव्यापारोऽपि लौकिकजनविमोहनेन स्वीयस्वरूपं गोपायितुम्। योगिनः खलु स्वीयं स्वरूपं गोपयितुं जडो-

शूद्रस्योपदेशानधिकारश्च तत्फलमिति हि तवाऽभिप्रेतम् । न तु तत्सि-
ध्यति तदुपसत्तेरुपदेशस्य च मुक्तदशायामेव समर्थनात् बद्धस्यैव हि प्राकृतनामरूपसम्बन्धः। बद्धदशायामेव तदुपसत्त्युपदेशयोरपि न दोषः पूर्वेमेव धर्मव्याधस्य दृष्टान्तितत्वात अत एवाह मनुर्द्वितीयाध्याये १३८

"श्रद्दधानः शुभां विद्यामाददीताऽवरादपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि" ॥

इति अत्र मुक्तावली अन्त्यश्चाण्डालः तस्मादपि जातिस्मरादेर्विहित-योगप्रकर्षाद्दुष्कृतशेषोपभोगार्थमवाप्तचाण्डालजन्मनः परं धर्मं मोक्षो-पायमात्मज्ञानमाददीतेति । (ङ) यदपि—

"क्वचिदत्राभिजायन्ते योगिनः सर्वयोनिषु ।
प्रत्यक्षितात्मनाथानां नैषां चिन्त्यं कुलादिकम्" ॥

इति श्लोके दिव्यसूरिप्रभावदीपिकायां शूद्रादपि विद्याग्रहणे प्रमाणत-योदाहृतमुपन्यस्याऽस्य श्लोकस्याऽर्षत्वाभावात् तद्रचितभारद्वाजसंहिता-स्थत्वात् 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इत्यार्षशास्त्रविरोधाद-प्रामाण्यमेवेत्युक्तम् ।

(च) तत्र पाद्मतन्त्रे प्रथमाध्याये—

"हैरण्यगर्भमागस्त्यं कार्ष्ण्यं बौधायनाह्वयम् ।
भारद्वाजं नारसिंहं गार्ग्यमुत्तरपूर्वकम्" ॥

---

न्मत्तपिशाचवज्जड्यान्दर्शयन्तो गूढाश्चरन्ति । तथाह्युक्तं शुकविषये भागवते प्रथमे "गूढो मूढ इवेयते" इति ।

(ङ) अथ कूपकूर्मस्येषानालोकितनानाविधार्षग्रन्थस्याऽमीमांसित-वेदान्तस्य प्रदीपकृतो मौढ्यं प्रकटयितुं तदीयं क्वचिदत्रेति श्लोकस्या-ऽनार्षत्वकथनेनाऽप्रामाण्याऽऽपादकशङ्काग्रन्थमुपादत्ते—यदपीति ।

(च) अथ प्रमाणपुरःसरं तच्छ्लोकस्य प्रामाण्यं प्रतिपादयितुं प्रतिजानीते—तत्रेत्यादिना । तन्निर्मितत्वं वैङ्गयनिर्मितत्वं तत्प्रयुक्तं वैङ्गयनिर्मितत्वप्रयुक्तं श्लोकस्य कल्पितत्वञ्चेत्यन्वयः । पञ्चरात्र-प्रामाण्यसमर्थनसमय इति । अयमभिप्रायः । पूर्वपक्षिणा 'पञ्चरात्रन्तु

इत्यष्टोत्तरशतसंहितामध्यपरिगणितताया अपि भारद्वाजसंहितायास्त-

यावदुपलभ्यते तत्सर्वं कृत्रिममेव' इत्यग्रेऽभिहितत्वात् पञ्चरात्र-मात्रस्य कल्पितत्वेऽभिप्रेते तदन्तर्गतपाद्मतन्त्रस्य तत्परिगणिता-ष्टोत्तरशतसंहितानाञ्च कल्पितत्वं किमुत वक्तव्यम्? किमुततरामष्टोत्तर-शतान्यतमभूताया भारद्वाजसंहितायाः? किमुततमां तत्रत्यस्य "किम-प्यत्राऽभिजायन्ते" इति श्लोकस्य कल्पितत्वमिति। एवम् "मूलं नास्ति कुतः शाखाः" इति न्यायेन मूलशैथिल्यप्रयुक्ततत्स्कन्धशाखाप-ल्लवादीनां शैथिल्यं मूलदार्ढ्ये व्यपोहित। तथा चेदानीं मूलभूत-पञ्चरात्रप्रामाण्यसिद्धौ सत्यां तदन्तर्गतपाद्मतन्त्रस्य तत्परिगणिता-ष्टोत्तरशतसंहितानां तदन्यतमभारद्वाजसंहितायाः(तत्रत्यस्यअ० १श्लो० ४४) "किमप्यत्रे'त्यादिश्लोकस्य च प्रामाण्यं सम्प्रतिपन्नमेव। नन्विदं सर्वं सति पञ्चरात्रप्रामाण्यनिश्चये स्यात्तदेव तु न सम्भवत्युपाया-भावादित्यत आह—पञ्चरात्रप्रामाण्यसमर्थनसमय इति। तथा-चाग्रे पञ्चरात्रस्य कृत्रिमत्वशङ्कावसरे महता विस्तरेण तत्प्रा-माण्यस्य समर्थितत्वात्सर्वं समञ्जसम्।

किञ्चाष्टोत्तरशतसंहितान्यतमभूताया भारद्वाजसंहिताया अस्म-द्रचितत्वं ब्रवीषि चेदन्यासां कस्य रचितत्वं ब्रूयाः। इमाः खलु पाद्मतन्त्रप्रथमाध्याये कण्वसम्वर्त्तसम्वादेन शतमष्टोत्तरं संहिताः परिगणिताः। यथा—"कण्व उवाच—

"कर्त्तृभेदात्तु तन्त्राणां नामधेयानि कानिचित्।
श्रोतुमिच्छामि विप्रेन्द्र! परं कौतूहलं हि मे॥

संवर्त्त उवाच—

शतमेकमथाष्टौ च पुराणे कण्व! शुश्रुम।
नामधेयानि चैतेषां श्रूयतां कथ्यते मया॥

पाद्मं पद्मोद्भवं मायावैभवं नलकूबरम्।
त्रैलोक्यमोहनं विष्णुं तिलकं परमाह्वयम्॥

नारदीयं धनदीयं वासिष्ठं पौष्कराह्वयम्।
सनत्कुमारं सनकं सत्याख्यं कण्व! संहिताः॥

न्निर्मितत्वं तत्प्रयुक्तम् "किमन्यत्राऽभिजायन्ते" इति श्लोकस्य कल्पितत्वञ्च पञ्चरात्रप्रामाण्यसमर्थनसमये निरसिष्यते ।

सनन्दाख्यं महाप्रश्नं श्रीप्रश्नं पुरुषोत्तमम् ।
माहेन्द्रसंहिता पश्च—प्रश्नाख्यं तत्त्वसागरम् ॥
वागीशं शाश्वतं तेजो-द्रविणं श्रीकराह्वयम् ।
सांवर्त्तं विष्णुसद्भावं सिद्धान्तं विष्णुपूर्वकम् ॥
विष्णुतत्त्वञ्च कौमारं रहस्यं त्रिष्णुपूर्वकम् ।
विष्णुवैभविकं सौरं सौम्यमीश्वरसंहिता ॥
अनन्ताख्यं भागवतं जयाख्यं मूलसंहिता ।
पुष्टितन्त्रं शौनकीयं मारीचं दक्षसंहिता ॥
औपेन्द्रं योगहृदयं हारीतं पारमेश्वरम् ।
आत्रेयं मन्दरं विश्व—कसेनमौशनसाह्वयम् ॥
वैहायसं विहगेन्द्रं भार्गवं परपूरुषम् ।
याज्ञवल्क्यं गौतमीयं पौलस्त्यं शाकटाह्वयम् ॥
ज्ञानार्णवं जामदग्न्यं याम्यं नारायणात्मकम् ।
पाराशर्यञ्च जाबालं कापिलं वामनाह्वयम् ॥
जयोत्तरं बार्हस्पत्यं जैमिनं सात्त्वताह्वयम् ।
कात्यायनकं बाल्मीक—मौपगायनसंहिता ॥
हैरण्यगर्भमागस्त्यं काण्वं बौधायनाह्वयम् ।
भारद्वाजं नारसिंहं गार्ग्यमुत्तरपूर्वकम् ॥
शातातपमाङ्गिरसं काश्यपं पैङ्गलाह्वयम् ।
त्रैलोक्यविजयं योग—वित्ताख्यञ्चैव वारुणम् ॥
कृष्णचामरमाग्नेयं मार्कण्डेयस्य सङ्ग्रहः ।
महासनत्कुमाराख्यं व्यासाख्यं विष्णुसंहिता ॥
संहिता चाहिर्बुध्नस्य ब्रह्मन्नाद्यैव संहिता ।
सम्वादं शुकरुद्राभ्या—मुमामाहेश्वराह्वयम् ॥
दत्तात्रेयञ्च शार्वाख्यं वराहमिहिराह्वयम् ।
सङ्कर्षणाख्यं प्रद्युम्न-संहिता कर्कसंहिता ॥
प्राचेतसाख्यमित्येताः शतमष्टोत्तरं स्मृतम्" इति

(छ) गीताश्लोकविरोधारोपणन्तु तदर्थापरिज्ञानं सूचयति । तत्र हि पञ्चमाध्यायान्तं ज्ञानयोगसाधनमनभिसंहितफलकर्मयोगमुक्त्वा तादृश-कर्मयोगिनस्तत्साध्यमात्मावलोकनरूपयोगं षष्ठेऽध्याये आरभ्य "युक्त इत्युच्यते योगी" इत्यनेन कर्मयोगनिष्ठस्य ज्ञानयोगार्हत्वमुक्त्वा "योगी युञ्जीत सततम्" इत्यादिना ज्ञानयोगाभ्यासप्रकारमुक्त्वा "अयतिः श्रद्धयोपेतः" इत्यादिना योगाभ्यासकाले फलान्तरतृष्णया योगभ्रष्टस्याऽनभिसंहित-फलकेन कर्मणा अनिष्पन्नेन ज्ञानयोगेन च फलालाभादुभयभ्रष्टो भवेदिति प्रश्नमुपाक्षिप्य "पार्थ ! नैवेह नामुत्र" इत्यादिनोभयफलावाप्तिं प्रतिज्ञाय "प्राप्य पुण्यकृताँल्लोकान्" इति कर्मयोगफलमुक्त्वा "शुचीनां श्रीमतां गेहे" इत्यादिना पुनर्ज्ञानयोगसाधनसम्पत्तिद्वारा तत्फलावाप्तिश्चोच्यते इत्थञ्च तत्र योगभ्रष्ट इति योगशब्देनाऽऽत्मावलोकनरूपयोग आरम्भदशापन्न उच्यते "क्विमप्यत्राभिजायन्ते योगिनः" इत्यत्र तु योगशब्देन निष्पन्नपरमात्मावलोकनाख्ययोग उच्यते ।

(ज) ततश्च निष्पन्नपरमात्मभक्तिका अत्र लोके सर्वयोनिषु किमपि प्रारब्धभोगलोकोत्तारणादिकं फलमुद्दिश्य जायन्त इत्यर्थकस्याऽस्य श्लोकस्य न कथञ्चिदपि गीताविरोधः ।

(झ) "यत्तु त्यक्त्वा स्वधर्म्मम्, सलिङ्गानाश्रमांस्त्यक्त्वा" इति भागवत-श्लोकद्वयस्य ज्ञानिनो वर्णाश्रमधर्मत्यागपरतया प्रतीयमानस्य—

"वर्णाश्रमाचारवता पुरुषेण परः पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥
वर्णाश्रमेषु ये धर्माः शास्त्रोक्ता नृपसत्तम ! ।
तेषु तिष्ठन्नरो विष्णु-माराधयति नान्यथा" ॥

---

(छ) "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" इति गीताश्लोकेन सह "क्वचिदत्राऽभिजायन्ते योगिनः सर्वयोनिषु" इति वचनस्य प्रदीपकृतोक्तं विरोधं प्रदीपकृतस्तदर्थापरिज्ञानसूचनपूर्वकं परिहरति—गीताश्लोकविरोधारोपणन्त्विति ।

(ज) गीताविरोधपरिहारमुपसंहरते—ततश्चेति ।

(झ) नाऽसङ्गतं मयादिति सङ्गतिरादित्याविशिष्टकथनस्यनिषिद्धत्वे-

इति विष्णुपुराणवचनद्वयविरोधात ये दैवाद्वर्णाश्रमादिच्युता आधुनिकमार्गावलम्बनरूपदोषरहिताः सन्तो भक्तिं कुर्वन्ति तेषां प्रोत्साहनार्थत्वमुक्त्वा अथवेत्यादिना "यस्तु कर्मफलत्यागी"इति गीतानुरोधेनाभिमानस्त्यागमात्रं विवक्षितं न तु स्वरूपत्याग इति निर्वाहान्तरमुक्त्वा किञ्चेत्यादिना "त्यक्त्वास्वधर्मम्"इत्यादिश्लोकेष्वप्याधुनिकमार्गाश्रयणाभ्यनुज्ञा नास्ति विष्णुपुराणे च 'तेषु तिष्ठन्नि'ति वर्णाश्रमाधिकारस्थितिरेव भगवदाराधनं नान्यधर्मापेक्षेत्युक्तम् "पन्था नान्यस्तत्तोषकारणमि"ति मार्गान्तराश्रयणञ्च निषिद्धमिति प्रलपितम्

तदकाण्डे ताण्डवितम्, शूद्रस्योपदेशाद्यनधिकारप्रकरणे वर्णाश्रमधर्मत्यागनिषेधस्याऽनुपयोगात नच त्यक्तवर्णाश्रमधर्मस्योपदेशानधिकारप्रदर्शनार्थमिदमिति वाच्यम्, तथाऽप्याश्रमधर्मत्यागस्य शूद्रे (ञ) प्रतियोगिना सहैवाप्रसक्त्याऽसङ्गतितादवस्थ्यात । यदिचेदमातिरिक्तं दूषणं तत्स्याद्वर्णाश्रमधर्मत्यागिनोऽद्वैतिन एव । तन्मतानुयायिना श्रीधरेण "त्यक्त्वा स्वधर्मम्"इति श्लोकव्याख्यान एव भक्तिरसिकस्य कर्मानधिकारान्नानर्थशङ्का अङ्गीकृत्याऽप्याह वा शब्दः कटाक्षे यत्र क्व वा नीचयोनावपि अमुष्य भक्तिरसिकस्याऽभद्रमभूत्किमिति व्याख्यानात बहुप्रदेशेषु तेन कण्ठरवेण धर्मत्यागप्रतिपादनात् ॥

(ट) न हि रज्जौ दृष्टसर्पो घण्टाघोषेण वार्यत इति अद्वैतिभिर्बहुधा कर्मणोऽवहेलितत्वाच्च ॥

---

मूर्खशिरोमणेर्नरस्य तज्ज्ञानाभावात्तस्य सङ्गत्यनभिज्ञत्वं प्रदर्शयितुं दीर्घतरं तत्प्रलापमुपादत्ते—यत्तु त्यक्त्वेत्यारभ्य प्रलपितमित्यन्तेन ।

(ञ) प्रतियोगिना सहैवेति "न शूद्रस्याश्रमः कश्चित"इति शूद्रस्याश्रमाभावादेवाश्रमधर्मरूपप्रतियोगिविरहः केवलं शूद्रस्य वर्णधर्म एवास्ति न त्वाश्रमधर्मस्तथाचाश्रमधर्माभावे तत्त्यागस्य प्रसक्तिः कुतः? श्रीसम्प्रदायिषु दूषणान्तरारोपमाशङ्क्य तद्दूषणमद्वैतिष्वेव स्थिरीकरोति—तत्स्यादिति ॥

(ट) अद्वैतिनां कर्मणोऽवहेलनप्रकारं दर्शयति—नहीति । रज्जौ दृष्टसर्प इति, अधिष्ठानभूतायां रज्जावध्यस्तः सर्पो घण्टाशब्देन नहि

(ठ) अस्माकं त्वावश्यकवर्णाश्रमधर्माणां त्यागानुष्ठानवचनयोः फलस्वरूपपरतया न कश्चिद्विरोधः।

यत्तु दैवाच्च्युतानामाधुनिकमार्गावलम्बदोषरहितानां भक्तानांप्रोत्साहनार्थौ भागवतश्लोकाविति तन्न प्रोत्साहनं हि डिम्भप्रलम्भनम्, तस्मादुपक्रोऽथ पतेत्ततो यदि" इति यदिशब्देन धर्मत्यागिनोऽपि भगवद्भक्तस्य पतनाभावस्यैव प्रतीयमानत्वात् वास्तवार्थप्रतिपादकत्वलाभेन प्रोत्साहकत्वमनुपपन्नं श्रीधरेण च यदिशब्दः पतनाभावपरतयैव व्याख्यातः अस्मन्मार्गस्याधुनिकत्वञ्च बोधायनादिप्रदर्शनादेव निरस्तम्। अत एव तन्मार्गावलम्बनं न दोषः प्रत्युत दुर्मार्गनिष्ठस्य सन्मार्गावलम्बनं गुण एव।

(ड) किञ्च अद्वैतिनां मतमेवाधुनिकं किन्न स्यात्? प्राचीनत्वे नियामकाभावात्। ननु "नारायणं पद्मभवं वसिष्ठं शक्तिञ्च तत्पुत्रपराशरं च व्यासं शुकं गौडपदं महान्तम्" इतिह्यस्मद्गुरुपरम्परेति चेन्न एत-

---

वार्यते नाऽपगच्छतीति भावः। बहुधेति "सत्यं भावं न वित्तिर्व्यपनुदति यतः कर्मनाश्यो घटादि—र्मिथ्याभूतश्च कर्म क्षपयति न तथा वित्तिघात्यं यतस्तत्॥ इत्थं सिद्धे विभागे श्रुतिशिखरगिरा वित्तिघात्यः प्रतीतो बन्धो मिथ्येति युक्तं न तदपहृतये कर्मजातं समर्थम्" आविद्यो ह्येष बन्धो विरमति न विना वेदनं कर्मजालै-र्मालेदूभूतोऽहिरस्तं व्रजति किमु नमस्कारमन्त्रौषधाद्यैः" इत्याद्यनेकग्रन्थेषु बहुप्रकारैरवहेलितत्वादद्वैतिन एव नियतं वर्णाश्रमोचितकर्मधर्मत्यागिन इति।

(ठ) स्वसम्प्रदाये वर्णाश्रमधर्मत्यागानुष्ठानपरवचनानां शास्त्रीयां गतिं दर्शयति—अस्माकं त्विति। तथाच वर्णाश्रमधर्मत्यागपरवचनानां तादृशधर्मजन्यफलत्यागे तात्पर्यम् अनुष्ठानपरवचनानान्तु स्वरूपतः अनुष्ठाने तात्पर्यमिति भावः। एवञ्च वर्णाश्रमधर्माणां फलतस्त्यागः स्वरूपतोऽनुष्ठानमिति। तदुभयमपि वैष्णवानां निष्कामाधिकारित्वाद्वैदिकत्वाच्चेति भावः॥

(ड) अथाद्वैतिनां मतस्यैवाऽधुनिकत्वं समर्थयते—किञ्चेति। तदीयगुरुपरम्पराश्लोकस्य प्रतिबन्द्यनुसारेण कल्पितत्वं स्थापयति एतद्वचनस्येति।

द्वचनस्य विप्रलम्भकैर्भवद्भिः कल्पितत्वात् न हि वासिष्ठोऽद्वैतमतप्रवर्त्तक इति प्रामाणिकग्रन्थेषु दृश्यते । किञ्च शुकस्य गौडपदं प्रति अद्वैतोपदेशे न मानमुपलभ्यते अतश्चेयं परम्पराऽप्रामाणिकी स्यात् तेषां चरित्रं चार्षग्रन्थसम्मतमेव प्रमाणमिति पूर्वं त्वयैवोक्तत्वात् ।

यदपि भागवतवचने आधुनिकमार्गान्तराश्रयणं नाभ्यनुज्ञायते विष्णुपुराणे च तन्निषिध्यत इति तदसम्बद्धं त्यक्तवर्णाश्रमधर्मस्य मार्गस्यानाश्रयणीयतयाऽभिप्रेतत्वे "त्यक्त्वा स्वधर्मम्" इति भागवतवचने तदभ्यनुज्ञानसत्त्वाद्वैष्णवमार्गानाश्रयणस्याभिप्रेतत्वे विष्णुपुराणे तदाश्रयणनिषेधाभावात् तत्र हि त्यक्तवर्णाश्रमधर्मकमार्गाश्रयणमेव निषिध्यते ।

यदप्येवमित्यादिना (ढ) नाममाहात्म्येषु आधुनिकमार्गप्रवेशानतुज्ञानात् तदुक्तनामापराधग्रस्तत्वाच्च तेषां भगवन्नामग्रहणं निष्फलमित्युक्तम् तत्र मार्गे आधुनिकत्वमसकृन्निरस्तम् अननुज्ञानहेतुश्चाप्रयोजकः न हि नाममाहात्म्ये भोजनं नाभ्यनुज्ञातमिति भोक्तुर्नामग्रहणं निष्फलं भवति (ण) नामापराधग्रस्तत्वं चासिद्धं नह्यधिकारिणोऽपि नामापराधः ।

(ढ) नाममाहात्म्येषु आधुनिकमार्गप्रवेशाऽननुज्ञानादित्यत्र मार्गे तावदाधुनिकत्वं किं शङ्कराचार्यात्पश्चाद्भावित्वम् उत कलियुगारब्धत्वमभिप्रेतम् ? तत्र श्रीसम्प्रदायमार्गस्य शङ्करादद्बहुतरप्राचीनत्वान्नाद्यं नापि द्वितीयं द्वापरोत्पन्नभक्तिसारादीनामस्मिन्मार्गे प्रविष्टत्वस्य प्रदर्शितत्वात् । वस्तुतस्तु मास्तु श्रीसम्प्रदायस्याधुनिकत्वं तथाप्याधुनिकमार्गप्रविष्टानामपि भगवन्नामग्रहणं निष्फलमिति कस्मादवगतं मन्दमतिना किञ्च अधुना कलियुगे नामसङ्कीर्त्तनरूपं मार्गमेव सर्वोत्कृष्टं गणयन्ति बुधास्तथाच नामसङ्कीर्त्तनमार्गोऽप्याधुनिक एव कृतयुगादौ ध्यानादेरेव विशिष्टत्वप्रतिपादनात् । तथाच नामसङ्कीर्त्तनरूपाधुनिकमार्गप्रविष्टानान्तु नाममाहात्म्येष्वनुज्ञैव नास्ति तर्ह्यधुना नामाधिकारी को वा भवेदिति निपुणं विचारय मन्दमते ! ।

(ण) नामापराधग्रस्तत्वञ्चाऽसिद्धमिति । इमे खलु नामापराधाः पाद्मे ब्रह्मखण्डे ( अ० २५ ) नारदं प्रति सनत्कुमारेणोक्ताः यथा—

"सतां निन्दा नाम्नः परममपराधं वितनुते ।
यतः ख्यातिं यातं कथमु सहते तद्विगरहाम् ॥

यदप्यस्वीकृताधुनिकमार्गपरमेव नाममाहात्म्यमित्युक्तम्। तदपि तत्र हेत्वनुपन्यासात् प्रत्युत भागवते द्वादशे —

"कलेर्द्दोषनिधे राजन्नस्ति ह्येको महान् गुणः।
कीर्त्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत्" ॥

इति बहुदोषेष्वपि नामग्रहणसाफल्यकीर्त्तनाच्चाऽनुपादेयम्। यदपि तस्माच्छठकोपादिनीचजातिप्रवर्त्तितश्रुतिस्मृत्यादिविरुद्धाधुनिकमार्गे प्रविष्टा निष्फलश्रमा वर्णाश्रमाधिकारच्युता भवन्तीति निगमनं तत्र शठकोपस्य नीचयोनिभवत्वमात्रेण न नैच्यं तस्य ज्ञानाधिकत्वात् इदञ्चाग्रे निपुणतरमुपपादयिष्यते तत्प्रवर्त्तितत्वादाधुनिकत्वन्तु पूर्वमेव निरस्तम्। श्रुतिस्मृत्यादिविरुद्धत्वं च तदनुपपादनादुपेक्ष्यम्। तच्छ्रमसाफल्यञ्च पूर्वमेवोक्तम्। वर्णाश्रमाधिकारच्युता इति चाप्रामाणिकम् प्रत्युत सर्वमिदं शाङ्करेष्वेव संभवति शङ्करप्रवर्त्तितत्वेनाधुनिकत्वात् तत्कल्पितत्वञ्च तन्मतस्य साक्षाद्ब्रह्मसूत्रप्रणेतृबादरायणशिष्यबोधायनमहर्षिमतानादरात्सिध्यति ब्रह्मनिर्विशेषत्वजगन्मिथ्यात्वाद्युपोद्घोषाच्छ्रुतिस्मृत्यादिविरोधोऽपि स्पष्टः निष्फलश्रमत्वं च सत्यसंसारस्य मिथ्यात्वावगतिमात्रेणानिवृत्तेः न हि स्वमारणायाभिद्रवन् व्याघ्रो मिथ्येत्यवगममात्रेण न मारयति वर्णाश्रमधर्माधिकारच्युतत्वञ्च मिथ्याभूतजगन्निवृत्तौ कर्मानपेक्षाया बहुषु तद्ग्रन्थेषूद्घोषणात्स्पष्टमेवेति।

यदप्येतेनेत्यादिना शूद्रप्रथमप्रवर्त्तितत्वान्न तद्धर्मः शास्त्रमूलकः शूद्रस्य सर्वधर्ममूलभूतवेदश्रवणेऽप्यनधिकारादिति तत्र शूद्रस्य प्रवर्त्त-

---

शिवस्य श्रीविष्णोर्य इह गुणनामादिसकलम्।
धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः॥
गुरोरवज्ञा श्रुतिशास्त्रनिन्दनम्।
तथार्थवादो हरिनाम्नि कल्पनम्॥
नाम्नो बलाद्यस्य हि पापबुद्धि-
र्न विद्यते तस्य यमैर्हि शुद्धिः॥
श्रुतेऽपि नाममाहात्म्ये यः प्रीतिरहितोऽधमः।
अहम्ममादिपरमो नाम्नि सोऽप्यपराधकृत" इति।

कत्वं त्वसिद्धं नच शूद्रस्य प्रवर्त्तकत्वमात्रेण धर्मस्य शास्त्रमूलकत्वाभावः वेदानधिकारिभिर्विदुरधर्मव्याधादिभिः प्रवर्त्तितब्रह्मविद्यादेः शास्त्र-मूलकत्वाभावप्रसङ्गात् "ब्राह्मीं विद्यां निबोध मे" इतिह्याह धर्मव्याधः।

एतेन शूद्रस्य वेदनधिकारात्तत्प्रवर्तिते धर्मे प्रमाणमसम्भावित मिति वैष्णवधर्मे प्रमाणतयोदाहृतवचनानि सर्वाणि कल्पितानीत्यपि निरस्तम् प्रवर्त्तकस्य वेदानधिकारेऽपि सूताद्युक्तधर्म इव प्रमाणसम्भवेन तावता कल्पितत्वनिश्चयायोगात् शूद्रप्रवर्त्तितत्वं नास्त्येव मुक्तदशाय प्रवर्त्तितत्वादिति पूर्वमेवोक्तम्।

यत्तु वैष्णवधर्मवचनानां स्वेन प्रयत्नतो बह्वार्षग्रन्थशोधनेऽप्यदर्शनं कल्पितत्वे हेतुरित्युक्तम् तत्तिमिराक्रान्तनेत्रेण केनाचिदननुभूयमानत्व-मात्रेण सर्वानुभूतचन्द्रस्य कल्पितत्वोक्तिवदुपहास्यं तेषामार्षग्रन्थेष्वेव सर्वैरनुभूयमानत्वात् तत्स्थतया लिखितवचनस्य तत्रादर्शने तदेव पुस्तकं किमिति न प्रेषितम्।

यदप्येतैः पाषाण्डिभिः कल्पितेषु वासिष्ठस्मृत्यादिष्वेव शिवमुनि-ब्राह्मणनिन्दावैष्णवधर्मप्रशंसा चास्ति सत्या अपि वसिष्ठादिप्रोक्तस्मृ-त्यादय उपलभ्यन्ते तासु च वर्णाश्रमधर्ममात्रं दृश्यते नवैष्णवधर्म इति तत्र वासिष्ठस्मृत्यादीनां कल्पितत्वं न प्रमाणान्तरविरोधेन तस्यानिरूप-णात् नापि वसिष्ठस्मृत्यन्तरादिसत्त्वञ्च तत्सत्त्वे हि तदेव प्रेषणीयं स्यात् किञ्च तदेव वसिष्ठस्मृत्यन्तरादिकं कल्पितमिति किन्न स्यात् विनिगम काभावात् न च वैष्णवधर्माप्रतिपादनमेवाकल्पितत्वे नियामकं मन्वादिवादिति वाच्यम् वैष्णवधर्मप्रतिपादनमेवाकल्पितत्वे नियाम-कं भारतभागवतादिवादित्यपि कल्पनसम्भवात् अत एव शिवमुनि-ब्राह्मणनिन्दा वैष्णवधर्मप्रशंसा च भारतभागवतादिष्विव तत्राप्यस्तीति न तावता कश्चिद्दोषः दुर्मार्गनिरसनेन सन्मार्गप्रवर्त्तकत्वमेव

---

तत्र सन्निन्दागुर्ववज्ञाश्रुतिशास्त्रनिन्दनादिरूपनामापराधानामद्वैति-ष्वेव पर्यवसानं तैर्ब्रह्मव्यतिरिक्तस्य सर्वस्य गुरुशास्त्रादेर्नामरूपादे-श्च मिथ्यात्वस्य सिद्धान्तितत्वात्। परं पामराणां वैष्णवेषु श्रीविष्णु-शिवयोर्गुणनामादिभेददर्शनस्य भ्रमो जायते स तु भ्रम एव, वैष्णवानां यथार्थवेदान्तविज्ञानवत्त्वात् भेददर्शनस्य च वेदान्ताविषयकाज्ञानि-

हि शास्त्रकृत्यम् । वासिष्ठस्मृत्यन्तरादिषु वर्णाश्रमधर्मानादर्शनश्च भवाद्दशैर्महापापिष्ठैर्वेदमार्गविदूषकैः पाषण्डिभिर्ब्रह्मविदाचार्यमहर्षिद्रोहिभिर्वैष्णवधर्मप्रतिपादकतत्तत्स्मृतीतिहासपुराणस्थमहार्षिवचननिष्कासनादिति च कल्पयितुं शक्यत एव । ·भारतादिवचनानि चाग्रे उदाहरिष्यन्ते ।

बन्धनत्वात । वेदान्तशास्त्रे हि "यस्यात्मा शरीरं यस्य पृथिवी शरीरम्" इत्यादिवाक्यैर्यदा सर्वस्याऽपि चेतनाचेतनात्मकस्य जगतः शरीरात्मभावेन भगवदभिन्नत्वं प्रतिपादितं तदा शिवब्रह्मादीनां भगवतः श्रीविष्णोर्भिन्नत्वं कः पामरो ब्रूयात् । तथैवोक्तमस्मदीयदैन्यनिवेदनस्तवेऽपि यथा—

"शरीरन्ते सर्वं जगदिति च वेदैर्निगदितम् ।
शरीरी देषी त्वं भवसि तत एवाऽस्य जगतः ॥
अतस्त्वत्तो भिन्नं तृणमपि न मन्येऽत्र जगति ।
कथं ब्रह्मेशादीन् पृथगभिदधीतेह नु बुधः" ॥इति ।

यदि चानया रीत्या श्रीविष्णुशिवयोरभेददर्शनेऽपि तयोर्गुणनामादिभेददर्शनं वैष्णवैः कथमिव परिहातुं शक्यमित्युच्यते ? तर्हि नहि स्मार्त्तैरपि तच्छक्यमिति वयमपि ब्रूमः । यतो न हि जातु स्मार्त्ता अपि श्रीविष्णुसहस्रनामपुस्तकं दृष्ट्वा शिवसहस्रनामपुस्तकमेतदिति ब्रुवते । नाऽपि "सत्त्वं रजस्तम इति" इत्यादिपौराणिकश्लोकानां तमोऽभिमानी विष्णुः सत्त्वाभिमानी शिव इत्यादिकमर्थमभिदधते । अतो "यश्चोभयोः समो दोषः परिहारोऽपि तत्समः" इति न्यायेन श्रीविष्णुशिवयोर्गुणनामादिभेददर्शनेन नामापराधिनश्चेदुभयेऽपि नो चेन्नैकेऽपि स्युः । तत्त्वतस्तु—

"क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ।
आवां तवाङ्गसम्भूतौ तस्मात्केशवनामवान् ॥
आदिस्त्वं सर्वभूतानां मध्यमन्तस्तथा भवान् ।
त्वत्तः समभवद्विश्वं त्वयि सर्वं प्रलीयते ॥
अहं त्वं सर्वगो देव ! त्वमेवाऽहं जनार्दन ! ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ! ॥

यदप्येतैरुदाहृतं वचनं कुत्रत्यमिति निरूपणे कृते कृतकग्रन्थस्थमेव भविष्यति यद्यार्षग्रन्थस्थं स्यात्तदर्थप्रकरणादिभिरन्यथा नेयमिति तद्वासिष्ठस्मृत्यादीनां कृतकत्वानिरूपणात् सम्प्रतिपन्नार्षग्रन्थपरिदृश्यमानवचनानामर्थप्रकरणानिरूपणाच्च प्रलापमात्रमित्युपेक्षणीयम्। किञ्चार्षग्रन्थस्थवैष्णवधर्मप्रतिपादकवचनानामन्यथानयनविधानपरोक्तस्ववचनव्यक्त्या मूर्खशिरोमणिः स्वस्याग्राहित्वं विष्णुमहर्षिदूषकत्वं च

नामानि तव गोविन्द ! यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥
त्वद्विस्तारो यतो देव ! अहं भूतपतिस्ततः ।
न तदस्ति विना देव ! यत्ते विरहितं हरे ! ॥
इत्युक्त्वा देवदेवेशं मुनीन् प्राह पुनः शिवः ।
एवं जानीत हे विप्राः ! ये भक्ता द्रष्टुमागताः ॥
एतदेव परं वस्तु नैतस्मात्परमस्ति वै ।
हरिरेकः सदा ध्येयो भवद्भिः सत्वमास्थितैः ॥
नान्यो जगति देवोऽस्ति विष्णोर्नारायणात्परः"

इत्यादिहरिवंशपर्वगत ( अ०८४-८५ ) शिववचनेभ्यः श्रीविष्णोः परत्वे निश्चितेऽपि "तव यानि नामानि तान्येव मम नामानि यतोऽहं त्वद्विस्तारः" इति कथनाद् यो यदीयविस्ताररूपः स तन्नामभाक् यथाऽऽम्रवृक्षविस्ताररूपस्याऽऽम्रफलस्याऽपि आम्रपदवाच्यतेति । एतदपि "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादिरीत्या व्याप्तिकृतमेव भगवतः सर्वशब्दवाच्यत्वमिति । अयन्निष्कर्षः कारणगुणानां कार्य इव भजनीयगुणानां भक्तेषु सङ्क्रान्तत्वाच्छिवे ये कल्याणगुणाः सन्ति ते भगवत एव यानि च नामानि तान्यपि तस्यैवेति शिवस्य स्वकीयं किमपि नास्ति वैष्णवाग्रेसरत्वात्तस्य । अतो गुणनामादिषु भेदो नास्तीत्येवंविदां वैष्णवानां नामापराधग्रस्तत्वं न सिद्ध्यति ।

वस्तुतस्तु—

"जाते नामापराधे तु प्रमादेन कथञ्चन ।
सदा सङ्कीर्त्तयन्नाम तदेकशरणो भवेत् ॥

प्रकटीकुर्वन् "यस्तु नारायणं द्वेष्टि तं विद्यादन्त्यरेतसम्" इत्यस्य विषयीभवति ( त ) यदपीदानीं कृतकग्रन्थसङ्कीर्णप्रामाणिकग्रन्थनिर्द्धारोपाय उच्यत इति प्रतिज्ञाय यावतो वेदस्य तदङ्गोपाङ्गानां च सोपबृंहणानामध्ययनेऽध्यापने च प्रचुरव्यवहारो वर्त्तते येषां च सर्वैः प्रामाण्येनाङ्गीकृता व्याख्याऽस्ति तत्र नास्ति संदेहः तदितरत्सर्वं संदिग्धमेव संदिग्धं चासन्दिग्धाद्विलक्षणधर्म्मप्रतिपादकं चेत ( थ ) कृत्रिममेवेति निश्चय इति रोदनम्। तदत्यन्तासम्बद्धम् अत्र ह्यध्ययनाध्यापनप्रचुरव्यवहारस्य सर्वसम्प्रतिपन्नप्रामाणिकव्याख्यान-

"नामापराधयुक्तानां नामान्येव हरन्त्यघम्।
अविश्रान्तिप्रयुक्तानि तान्येवार्थकराणि यत" ॥

इति सनत्कुमारेण तत्रैव नामापराधिनोऽपि नामग्रहणसाफल्यवर्णनान्निन्दकस्य तथोक्तिस्तस्यैव बालिशत्वमनुमापयतीति ।

( त ) अथ प्रदीपकृता स्वेन प्रकटितां मूर्खतामरण्यरोदनत्वेन दर्शयति—यदपीदानीमित्यादिना।

( थ ) कृत्रिममेवेति निश्चय इति किमनेनायातं प्रकृते इति चेत् युष्माकं वैष्णवधर्मप्रतिपादिका वासिष्ठशाण्डिल्यहारीतादिस्मृतयः कृत्रिमाः सन्तीति। कथमिति चेदित्थं वासिष्ठस्मृत्यादीनाम् अध्ययनाध्यापनप्रचुरव्यवहारोऽपि नास्ति तथा सर्वैः प्रामाण्येनाङ्गीकृतं व्याख्यानमपि नास्त्यतस्तासु कृत्रिमत्वसन्देहो भवितुमर्हति परमसन्दिग्धमन्वादिस्मृतिभ्यो विलक्षणधर्मप्रतिपादकत्वन्तासु नो चेत्ताः कृत्रिमा इति निश्चयो न स्यादस्ति च तत्र तापादिपञ्चसंस्कारोर्द्ध्वपुण्ड्रधारणादिविलक्षणधर्मप्रतिपादकत्वमतस्ताः कृत्रिमा इति निश्चयः सुलभ इति भावः।

तदत्यन्तासम्बद्धमिति। आपत्तिजनकमित्यर्थः। आपत्तिमेव दर्शयितुं तद्विहितरोदनस्य निष्कृष्टार्थं सम्पादयति—अत्र हीत्यादिना। तथा चायमर्थः सम्पद्यते ग्रन्थे अध्ययनाध्यापनप्रचुरव्यवहाराभावात् सर्वसम्प्रतिपन्नप्रामाण्यकव्याख्यनाभावाच्च सन्दिग्धत्वं निर्द्धार्यते सन्दिग्धत्वे सत्यसन्दिग्धाद्विलक्षणधर्मप्रतिपादकत्वं यत्र यत्र तत्र तत्र कृत्रिमत्वमिति सामान्यमुखी व्याप्तिः सम्पद्यते। व्याप्तेरयुक्तत्वं दर्शयति—सा तु न युक्तेति। न युक्ता आपत्तिजनका। निरुक्ताभावद्वयस्य अध्य-

कत्वस्य चाभावात्सन्दिग्धत्वे सत्यसन्दिग्धाद्विलक्षणधर्मप्रतिपादकं यद्यत्तत्तत्कृत्रिममिति व्याप्तिः स्यात् सा तु न युक्ता निरुक्ताभावद्वयस्य समुच्चित्य सन्देहहेतुत्वे कापिलहैरण्यगर्भादिस्मृतिषु प्रचुरव्यवहारसर्वसम्प्रतिपन्नप्रामाण्यकव्याख्यानयोर्द्वयोरप्यभावेन तासां सन्दिग्धत्वादसन्दिग्धश्रुत्यपेक्षया विलक्षणार्थप्रतिपादकत्वाच्च कृतकत्वनिश्चयापत्तेः।

(द) अत एव न प्रचुरव्यवहारस्तादृशव्याख्यानोभयाभावस्सन्देहहेतुः कणादसूत्रादिषु प्रचुरव्यवहाराभावेनोभयाभावात्सन्देहेनासन्दि

यनाध्यापनप्रचुरव्यवहाराभावस्य सर्वसम्प्रतिपन्नप्रामाण्यकव्याख्यानाभावस्य चेत्यर्थः। समुच्चित्य समुच्चयं कृत्वा द्वयोरभावयोः सन्देहं प्रति हेतुता न तु द्वयोर्मध्ये कस्याऽप्येकस्येति यावत्। तथासति × कापिलहैरण्यगर्भादिस्मृतिषु द्वयोरभावेन सन्दिग्धत्वं स्यात् एवमसन्दिग्धश्रुत्यपेक्षया विलक्षणार्थप्रतिपादकत्वञ्चास्ति तथाहि "यतो वा इमानि भूतानि जायन्त" इति श्रुत्या ब्रह्मण एव जगज्जन्मादिकारणत्वं प्रतिपाद्यते तद्विलक्षणाऽर्थस्त्वब्रह्मात्मकप्रधानस्य कारणत्वं साङ्ख्येन, निमित्तकारणतामात्रमीश्वरस्य योगेन,प्रतिपाद्यत इति कापिलादिस्मृतीनां कृतकत्वनिश्चयापत्तिः स्यात्। सा तु नेष्टा नहि लोके साङ्ख्ययोगादीनां तादृशकृतकत्वं कोऽपि ब्रूते।

(द) अत एव आपत्तेरेव प्रचुरव्यवहारतादृशव्याख्यानोभयाभावः एकसत्त्वेऽपि द्वयत्रास्तीति प्रतीत्या एकस्य सत्त्वदशायामप्यपराभावप्रयुक्तोभयाभावः समायाति सोऽपि सन्देहहेतुर्न भवति कणादसूत्रादिषु तादृशव्याख्यानसत्त्वेऽपि प्रचुरव्यवहाराभावेनोभयाभावसत्त्वात् सन्देहे प्राप्ते सन्दिग्धत्वं तथैवासन्दिग्धश्रुत्यासूत्रात् विलक्षणार्थस्य परमाणुकारणवादरूपस्य प्रतिपादकत्वञ्चास्ति इति तत्राऽपि कृतकत्वनिश्चयापत्तिः॥ एवं जैमिनिसूत्रेषु प्रचुरव्यवहारसत्त्वेऽपि सर्वसम्प्रतिपन्नव्याख्यानाभावप्रयुक्तोभयाभावसत्त्वात्सन्देहे प्राप्ते सन्दिग्धत्वं तथैवासन्दिग्धाद्वेदान्तशास्त्राद्विलक्षणस्य काम्यकर्मरूपार्थस्य प्रतिपादकत्वञ्चास्त्यतस्तत्राऽपि कृतकत्वनिश्चयापत्तिः। उभयत्राऽपि कृतकत्वनिश्चयापत्तिरनिष्टैव॥

(×) कापिलं साङ्ख्यं हैरण्यगर्भो योगस्तथाच साङ्ख्ययोगादिस्मृतिष्वित्यर्थः।

ग्धव्यासूत्रविलक्षणार्थप्रतिपादकत्वेन च कृतकत्वनिश्चयापत्तेश्च जैमिनिसूत्रेषु सर्वसम्प्रतिपन्नव्याख्यानाभावेनोभयाभावात्सन्देहेनासन्दिग्धवेदान्तविलक्षणकाम्यकर्मप्रतिपादकत्वेन च कृतकत्वनिश्चयापत्तेश्च। (ध) यद्यसन्दिग्धयावद्ग्रन्थाप्रतिपादितार्थप्रतिपादकत्वं विवक्षितं काम्याकर्माणि च न तादृशार्था इत्युच्यते तर्हि प्रकृतवासिष्ठादिस्मृत्याद्युक्तवैष्णवधर्माणामसन्दिग्धयावत्तदन्तर्गतभारतादिप्रतिपाद्यत्वादेव न तासु कृतकत्वनिश्चयः। (न) किञ्च वसिष्ठस्मृत्यादिषु पाद्मोत्तरखण्डादिषु पाञ्चरात्रसंहितासु च प्रचुरव्यवहारो नास्ति चेत् कूर्मस्कान्दमात्स्यादिष्वपि तथैव स्यात्। दृश्यमानो व्यवहारो

---

(ध) जैमिनिसूत्रेषु कृतकत्वनिश्चयापत्तिवारणाय असन्दिग्धाद्विलक्षणधर्मप्रतिपादकामित्यस्यार्थं निर्वक्ति–यदीति। तद्विलक्षणार्थप्रतिपादकत्वञ्च तदप्रतिपादितार्थप्रतिपादकत्वं तथाचासन्दिग्धयावद्ग्रन्थेषु सकलासन्दिग्धग्रन्थेष्वप्रतिपादिता येऽर्थास्तत्प्रतिपादकत्वं विवक्षितमित्यर्थः। तथाच जैमिनिसूत्रप्रतिपादितानि काम्यकर्माणि न तादृशार्था न सकलासन्दिग्धग्रन्थाप्रतिपादितार्थाः काम्यकर्मरूपार्थानां वेदपूर्वभागतदुपबृंहणधर्मशास्त्ररूपासन्दिग्धग्रन्थप्रतिपादितत्वात् तस्माज्जैमिनिसूत्राणान्न कृतकत्वनिश्चयापत्तिरिति यद्युच्यते तदाप्याह–तर्हीति। तथाच यया रीत्या न जैमिनिसूत्रेषु कृतकत्वनिश्चयस्तयैव रीत्या वासिष्ठादिस्मृत्यादिष्वपि न कृतकत्वनिश्चय इति तुष्यतु भवान्॥

(न) मार्गान्तरगमनेऽपि सन्तोषयति—किञ्चेत्यादिना। वासिष्ठस्मृत्यादिषु पाद्मोत्तरखण्डादिषु पाञ्चरात्रसंहितासु च प्रचुरव्यवहारो नास्तीति यदि त्वं ब्रवीषि चेत् तर्हि वयमपि कूर्मस्कान्दमात्स्यादिषु प्रचुरव्यवहारो नास्तीति ब्रूमः। यदि कूर्मादिषु दृश्यमानो व्यवहारो नैवापह्नोतुं शक्यत इति त्वयोच्यते चेत् तर्हि वासिष्ठस्मृत्यादिष्वपि दृश्यमानव्यवहारस्य कथमपह्नवः शक्यते कर्त्तुमित्यस्माभिरपि शक्यते वक्तुम्। अथ 'तुष्यतु दुर्जन' इति न्यायेनापि तवोक्तप्रकारेणापि पञ्चरात्रस्य कृत्रिमत्वन्न सिद्ध्यतीत्याह—अपिचेति। प्रचुरव्यवहार इत्याद्यग्रे सर्वं स्पष्टम्॥

नापह्नोतुं शक्यत इति चेत् तर्हि प्रकृतेऽपि तुल्यम् । अपि च प्रचुरव्यवहारः सर्वसम्प्रतिपन्नव्याख्यावत्त्वञ्च पञ्चरात्रस्य तुल्यम् उत्पत्त्यसम्भवाधिकरणे पाञ्चरात्रस्य सर्वैर्व्याख्यातत्वात् किञ्च व्यवहारप्राचुर्यं यदि सर्वापेक्षया तर्हि वेदस्य शूद्रेषु व्यवहाराभावात् प्रचुरव्यवहारो न स्यात् । यदि तत्तदधिकारिसर्वापेक्षया तथाप्यधिकारिणामप्यपरिदृष्टवेदगन्धानां मूर्खाणां दृश्यमानत्वेन तद्दोषतादवस्थ्यात् । यदि शिष्टजनापेक्षया तर्हि पाञ्चरात्रादीनामपि भवादृशाशिष्टपठनाभावमात्रेण न प्रचुरव्यवहाराभावः । किञ्च व्याख्यानस्य सम्प्रतिपन्नत्वं सर्वापेक्षया चेत् तादृशी व्याख्या वेदान्तस्याऽपि न दृश्यते । शिष्टसम्प्रतिपन्नापि व्याख्या केषाञ्चित्पुराणानां न दृश्यत एव । यदि तत्र व्याख्यानाभावः तद्भिनाप्यर्थप्रतिपत्तेरित्युच्यते तर्हि वसिष्ठादिस्मृतिष्वपि तत्तुल्यम् ।

(‡)यत्तु पञ्चरात्रं यावदुपलभ्यते सर्वं कृत्रिममेव भारते पञ्चरात्रं प्रकृत्य-

"संस्थिते तु नृपे तस्मिन् शास्त्रमेतत्सनातनम् ।
अन्तर्द्धास्यति लोकेऽस्मिन्नेतद्वः कथितं मया" ॥

इत्युपरिचरस्य राज्ञोऽनन्तरमेव तस्य लुप्तत्वकथनादिति तद्यस्मात्कस्माच्चिदेकमेव श्लोकं श्रुतवतो नारायणीयोपाख्यानानवलोकनकृतम् ।

(*) तत्र ह्यग्रिमनारायणीये—

"अहो ह्येकान्तिनः सर्वान् प्रीणाति भगवान् हरिः"।

(‡) अथेदानीमुपलभ्यमानस्य पञ्चरात्रस्याऽकृत्रिमत्वं साधयितुं तत्कृतकृत्रिमत्वशङ्कामुत्थापयति—यत्त्विति । समाधत्ते—तदिति । यदुपरिचरवसोरनन्तरं पञ्चरात्रस्य लुप्तत्वकथनं तत्तव नारायणीयोपाख्यानानवलोकनकृतमित्यन्वयः ।

(*) अथ जनमेजयवैशम्पायनप्रश्नोत्तरमुखेन भगवत एवावान्तरप्रवर्त्तकत्वोक्त्या गीतापञ्चरात्रैकार्थ्यं प्रकाश्य पुनः पार्थं प्रति नारदोक्तिमुखेन पञ्चरात्रधर्मस्य षडाविर्भावतिरोभावानुपन्यस्य सप्तमाविर्भावपरम्परायां विवस्वन्मन्विक्ष्वाकुपरम्पराग्रहणेन गीतैकार्थ्यमुक्त्वा "गमिष्यति क्षयान्ते च पुनर्नारायणं नृप !" इति सप्तमातिरोभावस्य

इत्यादिना पूर्वं विस्तरेणोपदिष्टपाञ्चरात्रप्रक्रियानुवादपूर्वकम्—

"केनैष धर्मः कथितो देवेन ऋषिणाऽपि वा ।
एकान्तिनाश्च का चर्य्या कदा चोत्पादिता विभो !"

इति जनमेजयेन पृष्टस्य वैशम्पायनस्य वचनेन—

"समुपोढ्ष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के च गीता भगवता स्वयम्"

इति भगवत एव अवान्तरप्रवर्त्तकत्वोक्तिव्याजेन गीतापाञ्चरात्रैकार्थ्यं प्रकाश्य—

"ह्येतदर्थं महाराज ! पृष्टः पार्थेन नारदः"

इत्यादिना पार्थं प्रति नारदोक्तिमुखेन—

(प) "यदासीन्मानसं जन्म नारायणमुखोद्गतम् ।
ब्रह्मणः पृथिवीपाल ! तदा नारायणः स्वयम् ॥
तेन धर्मेण कृतवान् दैवं पित्र्यश्च भारत ! ।
फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे ॥
वैखानसाः फेनपेभ्यो धर्ममेतं प्रपेदिरे ।
वैखानसेभ्यः प्राप्तस्तु ततः सोऽन्तर्दधे पुनः ॥
यदाऽऽसीच्चाक्षुषं जन्म द्वितीयं ब्रह्मणो नृप ! ।
तदा पितामहेनैव सोऽयं धर्मः परिश्रुतः ॥

---

स्य भाविष्यत्त्वकथनं समर्थ्य क्षयान्तरभाविनिरोभावस्य बहुकालानन्तर्यपरत्वं वर्णयित्वाऽनन्तरं तुष्यत्विति न्यायेन वक्षोरनन्तरं भूलोके कञ्चित्कालं परम्पराविच्छेदमङ्गीकृत्य पुनरद्यावधि भूलोके प्रवृत्तिं नारदपरम्परया स्थापयितुमुपक्रमते—तत्र हीत्यादिना महता विस्तरेण ।

(प) "यदासीन्मानसं जन्म" इति अत्रेदं बोध्यं कस्मिंश्चित्कल्पे ब्रह्मणो जन्म भगवतो मनसः कदाचिच्चक्षुषः कदाचिद्वाचः कदाचिन्नासिकातः तथैवैतस्मिन्कल्पे भगवतो नाभिपद्मादत एवैतत्कल्पस्य पाद्मकल्प इति सञ्ज्ञाऽस्ति । सर्वशक्तिमतो भगवतो यदा यथा सङ्कल्पो जायते तदा तथैव भवतीति ।

नारायणात्मको राजन् ! रुद्राय प्रददौ च तम् ।
ततो योगस्थितो रुद्रः पुरा कृतयुगे नृप ! ॥
बालखिल्यानृषीन्सर्वान् धर्ममेतदपाठयत् ।
अन्तर्दधे ततो भूयस्तस्य देवस्य मायया
तृतीयं ब्रह्मणो जन्म यदाऽऽसीद्वाचिकं महत् ॥
तत्रैष धर्मः सम्भूतः स्वयं नारायणान्नृप !।
सुपर्णो नामत ऋषिः प्राप्तवान् पुरुषोत्तमात् ॥
तपसा वै सुतप्तेन दमेन विनयेन च ।
सुपर्णाच्चाऽप्यधिगतो धर्म एष सनातनः ॥
वायुना द्विपदां श्रेष्ठ ! कथितो जगदायुषा ।
वायोः सकाशात्प्राप्तश्च ऋषिभिर्विघसादिभिः ॥
ततो महोदधिश्चैव प्राप्तवान् धर्ममुत्तमम् ।
अन्तर्दधे ततो भूयो नारायणसमाहितः ॥
यदा भूयः श्रवणजा सृष्टिरासीन्महात्मनः ।
ब्रह्मणः पुरुषव्याघ्र ! तत्र कीर्त्तयतः शृणु ॥

तथोक्तं पञ्चरात्रे पारमेश्वरसंहितायां दशमपटले सनकशाण्डिल्य-सम्वादे भगवन्तं प्रति ब्रह्मणा—

"अहं प्रसादजस्तुभ्यं लोकधाम्ने स्वयम्भुवे ।
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ॥
चाक्षुषं यद्द्वितीयं मे जन्मेहासीत्पुरातनम् ।
त्वत्प्रसादाच्च मे जन्म तृतीयं वाचिकं महत् ॥
त्वत्तः श्रावणञ्चापि चतुर्थं जन्म मे प्रभो !।
नासिक्यञ्चापि मे जन्म त्वत्तः पञ्चममुच्यते ।
अण्डजं चाऽपि मे जन्म त्वत्तः षष्ठं विनिर्मितम् ॥
इदञ्च सप्तमं जन्म पद्मजं त्वामितप्रभम् ॥ १२५ ॥
सर्गे सर्गे ह्यहं पुत्र" इत्यादि ।

जगत्स्रष्टुमना देवो हरिर्नारायणः स्वयम्"
इत्यारभ्य—
"धर्मश्च मत्तो गृह्णीष्व सात्वतं नाम नामतः"
इति ब्रह्माणं प्रति हरिवचनमुक्त्वा—
"धर्म्मश्चाऽग्र्यं स जग्राह सरहस्यं ससङ्ग्रहम्।
आरण्यकेन सहितं नारायणमुखोद्गतम्॥
ततो हि सात्वतो धर्म्मो व्याप्य लोकानवस्थितः।
तेनैवाद्येन धर्मेण ब्रह्मा लोकविसर्गकृत्॥
पूजयामास देवेशं हरिं नारायणं प्रभुम्।
धर्मप्रतिष्ठाहेतोश्च मनुं स्वारोचिषं ततः॥
अध्यापयामास तदा लोकानां हितकाम्यया।
ततः स्वारोचिषः पुत्रं स्वयं शङ्खपदं ततः॥
अध्यापयत्पुराऽव्यग्रः सर्वलोकपतिः प्रभुः।
ततः शङ्खपदश्चाऽपि पुत्रमात्मजमौरसम्॥
दिशाम्पालं सुवर्णाभ-मध्यापयत भारत!।
सोऽन्तर्दधे ततो भूयः प्राप्ते त्रेतायुगे पुनः॥
नासिक्यजन्मनि पुरा ब्रह्मणः पार्थिवोत्तम!।
धर्ममेतं स्वयं देवो हरिर्नारायणः प्रभुः॥
उज्जगादारविन्दाक्षो ब्रह्मणः पश्यतस्तदा।
सनत्कुमारो भगवां-स्ततः प्राधीतवान्नृप!॥
सनत्कुमारादपि च वीरणो वै प्रजापतिः।
कृतादौ कुरुशार्दूल! धर्ममेतदधीतवान्॥
वीरणश्चाप्यधीत्यैनं रैभ्याय मुनये ददौ।
रैभ्यः पुत्राय शुद्धाय सुव्रताय सुमेधसे॥

कुक्षिनामाऽथ प्रददौ दिशाम्पालाय धर्मिणे।
ततोऽप्यन्तर्दधे भूयो नारायणमुखोद्भवः॥
अण्डजे जन्मनि पुन-र्ब्रह्मणे हरियोनये।
एष धर्म्मः समुद्भूतो नारायणमुखात्पुनः॥
गृहीतो ब्रह्मणा राजन्! प्रयुक्तश्च यथाविधि।
अध्यापिताश्च मुनयो नाम्ना बर्हिषदो नृप!॥
बर्हिषद्भ्यश्च सम्प्राप्तः सामवेदान्तगं द्विजम्।
ज्येष्ठं नामाभिविख्यातं ज्येष्ठनामव्रतो हरिः॥
ज्येष्ठाच्चाऽप्यनुसम्प्राप्तो राजानमविकम्पनम्।
अन्तर्दधे ततो राजन्नेष धर्मः प्रभोर्हरेः॥

इति श्रीपञ्चरात्रधर्मस्य भूतान् षडाविर्भावतिरोभावानुपन्यस्य—

यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप!।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह।
पितामहाय शुद्धाय युगादौ लोककारिणे।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ॥
ततो ज्येष्ठे तु दौहित्रे प्रादाद्दक्षो नृपोत्तम!।
आदित्ये सवितुर्ज्येष्ठे विवस्वान् जगृहे ततः॥
त्रेतायुगादौ च ततो विवस्वान्मनवे ददौ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ॥
इक्ष्वाकुना च कथितो व्याप्य लोकानवस्थितः"।

इति वर्तमानपाद्मकल्पीयप्रवृत्तिपरम्परोपदेशेन—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥

इत्युक्तगीतार्थपरपरास्मारकेण सूचितं पूर्वोक्तगीतैकार्थ्यम्।

यतीनाञ्चापि यो धर्मः स ते पूर्वं नृपोत्तम!।

कथितो हरिगीतासु समासविधिकल्पितः"

इति स्फुटतरमुक्त्वा—

गमिष्यति क्षयान्ते च पुनर्नारायणं नृप!"।

इति तिरोभावस्य भविष्यत्वं निर्दिश्यते। न हि पार्थसमये उपरिचरो वसुरतिष्ठत् न वा पार्थादनन्तरभावी येन पार्थकाले भविष्यतया निर्दिष्टस्तिरोभावो वसुराजकालाव्यवहितानन्तरभावी स्यात्। अतः"संस्थिते तु नृपे तस्मिन्" इति नाव्यवहितानन्तर्यमुच्यते अपि तु क्षयान्तभाविपञ्चरात्रतिरोभावस्य वसुकालानन्तर्यमात्रमवलम्ब्य। तच्च धर्मिष्ठजनशून्ये काले नायं धर्मोऽवतिष्ठत इत्येतद्धर्मस्तुत्यर्थमुच्यते। यद्वा उपरिचरे परलोकं गते तत्परम्परा विच्छिद्यत इत्येतन्मात्रपरं संस्थिते त्विति वचनं न तु परम्परान्तराविच्छेदपरमपि तदनन्तरमपि परम्परान्तराणां सत्त्वस्यानुपदमेव वक्ष्यमाणत्वात् वक्ष्यते च तत्रैव वसोः परम्पराविशेषः"राजोपरिचरो नाम"इत्यारभ्य"सात्वतं विधिमास्थाय प्राक्सूर्यमुखनिःसृतं पूजयामास देवेशम्"इति। अथवास्तूपरिचरानतरं कञ्चित्कालं भूलोके पूर्ववदेव शास्त्रविच्छेदस्तथापि न दोषः पुनर्नारदपरम्परया भूलोके प्रवृत्तिसम्भवात् नारदस्य तु शास्त्रावगतिः साक्षाद्भगवत एवेति तत्रैव स्फुटमुच्यते—

नारदेन तु प्राप्तश्च सरहस्यः ससङ्ग्रहः।
एष धर्मो जगन्नाथात् साक्षान्नारायणान्नृप!"

इति। तथा मध्येऽपि—

" प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः"

इत्यादिना श्वेतद्वीपं गतस्य नारदस्य नारायणं तत्रादृष्टवतः पश्चात्तदीयस्तोत्रप्रीतेन प्रत्यक्षविषयभूतेन भगवता—

"इमे ह्यनिन्द्रियाहारा मद्भक्ता श्चन्द्रवर्चसः।
एकाग्राश्चिन्तयेयुमाम्"

इत्यादिना विस्तरेण पञ्चरात्रप्रक्रियोपदेश उच्यते नारदमुखात्प्रवृत्तिश्च तत्रैवोच्यते—

"नारायणमुखोद्गीतं नारदोऽश्रावयत्पुनः।

ब्रह्मणः सदने तात ! यथादृष्टं यथाश्रुतम् ॥
ये चान्ये ब्रह्मसदने सिद्धसङ्घाः समागताः ।
तेषां सकाशात्सूर्यस्तु श्रुत्वा वै भावितात्मनाम् ॥
आत्मानुगामिनां राजन् ! श्रावयामास वै ततः ।
षट्षष्ठिर्हि सहस्राणि ऋषीणां भावितात्मनाम् ॥
सूर्यस्य तपतो लोका-न्निर्मिता वै पुरःसराः ।
तेषामकथयत्सूर्यः सर्वेषां भावितात्मनाम् ॥
सूर्यानुगामिभिस्तात ! ऋषिभिस्तैर्महात्मभिः ।
मेरोः समागता देवाः श्राविताश्चेदमुत्तमम् ॥
देवानां तु सकाशाद्वै ततः श्रुत्वा सितो द्विजः ।
श्रावयामास राजेन्द्र ! पितॄणां मुनिसत्तम ! ॥
मम चापि पिता तात ! कथयामास शन्तनुः ।
ततो मयापि श्रुत्वा च कीर्त्तितं तव भारत ! ॥
सुरैर्वा मुनिभिर्वापि पुराणं यैरिदं श्रुतम् ।
सर्वे ते परमात्मानं पूजयन्ति समन्ततः ”

वैशम्पायनः—

“श्रुत्वैतदाख्यानपरं धर्मराट् जनमेजयः ।
भ्रातरश्चाऽस्य ते सर्वे नारायणपराभवन् ”

सूतः—

“एतत्ते सर्वमाख्यातं वैशम्पायनकीर्त्तितम् ।
जन्मेजयेन तच्छ्रुत्वा कृतं सम्यक् यथाविधि ॥
यूयं हि तप्ततपसः सर्वे च चरितव्रताः ।
शौनकस्य महासत्रं प्राप्ताः सर्वे द्विजोत्तमाः ॥
यजध्वं सहुतैर्यज्ञैः शाश्वतं परमेश्वरम् ।
पारम्पर्यागतं ह्येतत् पित्रा मे कथितं पुरा ”

इति। तत्रैव स्थलान्तरेऽपि पाञ्चरात्रप्रकारमुक्त्वा—

"एवं स भगवान् व्यासो गुरुर्मम विशाम्पते!
कथयामास धर्मज्ञो धर्मराज्ञे द्विजोत्तम!॥
ऋषीणां सन्निधौ राजन्! शृण्वतोः कृष्णभीष्मयोः।
तस्याऽप्यकथयत्पूर्वं नारदः सुमहातपाः॥
देवं परमकं ब्रह्म श्वेतं चन्द्राभमच्युतम्।
यत्र चैकान्तिनो यान्ति नारायणपरायणाः"

इति। तत्रैवाग्रेऽपि—

एष ते कथितो धर्मः सात्वतः कुरुनन्दन!।
कुरुष्वैनं यथान्यायं यदि शक्नोषि भारत!॥
एवं हि स महाभागो नारदो गुरवे मम।
प्रचेतानां यतीनाञ्च एकान्तगतिमव्ययाम्॥
व्यासश्चाकथयत्प्रीत्या धर्मपुत्राय धीमते।
स एवार्थं मया तुभ्य-माख्यातः प्रसृतो गुरोः"

इत्युक्तम्। अतः उपरिचरादनन्तरम् नारदेन पुनः प्रवर्त्तनम् प्रामाणिकम्। अत एवैतस्य लोके नारदपञ्चरात्रमिति प्रसिद्धिः। भीष्मपर्वणि च पञ्चमदिनरात्रौ दुर्योधनं प्रति भीष्मवचने

"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः।
सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिः॥
सात्वन्तं विधिमास्थाय गीतः सङ्कर्षणेन यः।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च॥

इति कलियुगादौ पाञ्चरात्रप्रचारः स्फुटतरमुक्तः किञ्च यद्युपरिचरानन्तरमेव शास्त्रविलोपस्तर्हि तदनन्तरकालिकैर्युधिष्ठिरजनमेजयशन्तनुभीष्मप्रभृतिभिः कथन्तदनुष्ठानम्? तेषामनुष्ठानं हि उक्तवचनेषु स्फुटम्। अपि च वसोरनन्तरं शास्त्रविलोपे शङ्क-

रभास्करादिभाष्यकाराणां वसोरत्यन्तमनन्तरभाविनां कथं तदर्थोपन्यास उपन्यस्तश्च तैरर्थे उत्पत्त्यसम्भवाधिकरणे अतः संस्थितेत्वित्यस्य पूर्वोक्त एवार्थः।

(फ) यदपि प्रकृते त्वित्यादिना तन्मताद्याचार्यैः शठकोपादिभिः पूर्वं स्वभाषायामेव निर्मायोपदिष्टग्रन्था द्राविडवेदसञ्ज्ञया तदनुयायिभिर्व्यवह्रियन्ते पश्चादुत्तरोत्तरमुत्तमजातयोऽपि तन्मते प्रविष्टा अधीत्यधीत्य संस्कृतेऽपि व्युत्पन्नास्ते द्रविडवेदं संस्कृतभाषया व्याख्याय तां व्याख्यां द्रविडभाष्यमिति व्यवहरन्ति। पश्चात श्रीभाष्यप्रभृतिबहुग्रन्था निर्मिताः किञ्चतन्मतस्यार्षशास्त्रेषु मूलमनुपलभ्यार्षनाम्ना बहुग्रन्था निर्मिता तेषु च बहूनामपरिशीलतश्रुतिस्मृतीनां सत्यत्वभ्रमो जायते अतः पाषण्डभीरुभिस्तदुक्तवचनानां पूर्वोक्तरीत्या निर्द्धारः कर्त्तव्य इत्युक्तम्।

(ब) तत्र शठकोपादेर्मताद्याचार्यत्वं पूर्वमेव प्रत्युक्तं तद्ग्रन्थानान्द्रविडवेदसञ्ज्ञया व्यवहारश्च युक्त एव वेदार्थप्रतिपादकत्वेन तदुपबृंहकत्वात नचैवमन्यत्राऽपि तद्व्यवहारापत्तिः "वेदानध्यापयामास महाभारतपञ्चमान्" "भारतः पञ्चमो वेदः" इति भारते वेदोपबृंहणभूते वेदत्वव्यवहारसत्त्वात पुराणेषु कुतो नास्तीति चेत भवन्तमेव पृच्छामः कुतो नास्तीति ?। उत्तमजातीनां पश्चात्तन्मतप्रवेशोक्तिस्तु बोधायनादिप्रदर्शनान्निरस्ता। अधीत्याधीत्य व्युत्पन्ना इति व्यर्थम् अध्ययनम् विना कस्याऽपि व्युत्पत्त्यसम्भवात। द्रविडवेदं संस्कृतेन व्याख्यायेति तु अज्ञनात संस्कृतव्याख्यानस्याऽकृतत्वात। या तु द्रविडभाष्यमित्युच्यते स द्रविडाचार्येण कृता रामानुजभाष्यमूलभूता ब्रह्मसूत्रव्याख्यैव अतस्तत्र तव भ्रान्तिरेव। पश्चाच्छ्रीभाष्यादिनिर्माणोक्तिश्च व्यर्था तेन दोषास्फुरणात। तस्मात्किञ्चिद्व्यवहितपूर्वमेव हि शङ्करभाष्यादिकमपि। कृतञ्च हि श्रीमद्भाष्यादनन्तरमपि मध्वभाष्यम् आर्षशास्त्रेषु मूलमनुपलभ्येति हास्यम्। विष्णुध-

(फ) अथ प्रदीपलिखितान् व्यर्थप्रलापानुपन्यस्यति—यदपीत्यादिना।

(ब) प्रलापानेवैकैकशो दूषयति–तत्रेत्यादिना।

मांदिदूषणोद्भूततमःसमावृतचक्षुषां सर्वात्मनाऽन्धानां भवदृशां
"तानहं द्विषतः क्रूरान्संसारेषु नराधमान् क्षिपामि" इति भगव-
त्प्रतिज्ञाविषयीभूतानामनुपलम्भेऽपि ज्ञानिनां "ददामि बुद्धियोगं तम्"
इति प्रतिज्ञाविषयाणां तदुपलम्भसम्भवात् । सर्वैर्विशदतरमुपलभ्य-
मानानपि यदाऽर्थानुलूको न पश्यतीति हि प्रसिद्धम् । आर्षनाम्ना
बहुग्रन्था निर्मिता इति चायुक्तम् । त्वया मन्दमतिना तथा विले-
खनेऽपि त्वद्वचनैरेव "आधुनिके मते प्रविश्य शनैः शनैः केचन संस्कृ-
तेऽपि पण्डिता अधुनाऽभूवन्" इति श्रुतवतो विस्तृततमान् बहुलार्थान्
पाञ्चरात्रग्रन्थाँश्च पश्यतोऽनुन्मत्तस्य कस्याऽतिशीघ्रमेवैतावद्ग्रन्थाः
कृताः प्रचारिताश्चेत्यर्थो बुद्धिमारोहेत । किञ्च एतेषां कृतकत्वस्य
कथञ्चिन्मन्दमतीन्प्रति त्वयोपदेशे कृतेऽपि तवाद्याचार्यतयाभिमता-
च्छठकोपादप्यत्यन्तप्राचीनं बोधायनीयवृत्तिग्रन्थमतिबहुलं केन कृत-
मुपादिशेः ? अपरिशीलितश्रुतिस्मृतीनां तेषु सत्यत्वभ्रमो जायत
इति च न युक्तम् । श्रुतिस्मृतिपरिशीलनेनाऽसत्यत्वभ्रमोत्पत्तिप्रका-
रानिरूपणात् कृतकत्वनिर्द्धारप्रकारश्च पूर्वमेव निरस्तः (भ) यत्तु
वासिष्ठहारीतपाराशरस्मृतिगतानि पञ्चसंस्कारावश्यकत्वतद्रहितवि-
निन्दनरुद्रार्चनादिनिषेधबोधकानि वचनानि विलिख्य तानि शिव-
ब्राह्मणनिन्दापराणीत्युक्तम् । तदपि न, तत्राऽचक्रादिसंस्कृतब्राह्मणनि-
न्दावचनानां नहि निन्दान्यायेन वैष्णवधर्मस्तुतिपरत्वात् असंस्कृ-
तस्य न तादृशकर्माद्यर्हतेत्यर्थः (म) रुद्रार्चननिषेधोऽपि न शिव-
निन्दा तस्य जगत्कारणत्वाभावेन तमःप्राधान्येन मुमुक्ष्वपेक्षितफलदा-
नाशक्त्या चाभजनीयत्वमात्रपरत्वात् "कारणं तु ध्येयः" इति हि श्रुतिः
न ह्यजगत्कारणत्वोक्तिः (क) कस्यचिज्जीवस्य निन्दा भवति ? यद्य-

(भ) अथ सात्विकशास्त्रगतपरमैकान्त्यधर्मप्रशंसातद्रहितनि-
न्दाबोधकत्वेन प्रतीयमानवचनानां वास्तविकशिवब्राह्मणनिन्दापर-
त्वप्रलापं दूषयितुं तदभिप्रायमुपन्यसति-तदपि नेत्यादिना ।
(म) रुद्रार्चननिषेधमेव शिवनिन्दां मन्वानस्य सन्देहमपनय-
ति-रुद्रार्चननिषेधोऽपीति । तथा च रुद्रादिदेवतानां मुमुक्षुभिर-
भजनीयत्वकथनं न निन्देति भावः ।
(क) चतुर्मुखमहादेवयोर्जीवत्वन्तु तयोः कर्मवश्यत्वादन्ते मोक्ष-

भजनीयत्वाद्युक्तिनिन्दा सा तु भागवतादिसाधारणीति न दोषाय ।

तथाहि भारते नारारायणीये—

पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवापुनः ।
रजसा तमसा चास्य मानसं समभिप्लुतम्"

इति ब्रह्मरुद्रदृष्टस्याऽपि रजस्तमःप्राचुर्यौत्तयातयोस्त त्कैमुत्यन्यायेनोक्तम् ॥

भागवते च प्रथमस्कन्धे द्वितीयेऽध्याये--

"सत्वं रजस्तम इति प्रकृतर्गुणास्तै-
र्युक्तः परः पुरुष एक इहाऽस्य धत्ते ।
स्थित्यादये हरिविरञ्चिहरेति सञ्ज्ञाः
श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः"
मुमुक्षवो घोरमूढान् हित्वा भूतपतीनथ ।
नारायणकलाःशान्ता भजन्ति ह्यनसूयवः ॥
रजस्तमःप्रकृतयः समशीला यजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः"

इति ब्रह्मरुद्रयो रजस्तमःप्राधान्यान्मुमुक्षवनुपास्यत्वम् तदुपासकानामपि रजस्तमःप्राधान्यं चोक्तम् । तथा द्वितीयस्कन्धे विस्तरेण हरिभजनमुक्त्वा" न ह्यतोऽन्यः शिवः पन्था." इति मार्गान्तरान्निषिध्य तृतीयाध्याये "विद्याकामस्तु गिरिशम्" इति रुद्रोपासनस्य तुच्छफलत्वमुक्त्वा—

---

श्रवणाच्चानायासेन निश्चेतु शक्यं यथोक्तं महाभारते कुण्डधरोपाख्याने

"युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः ।
पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुमः" इति ॥

तत्रैव युधिष्ठिरशोकापनोदे च-

"विश्वरूपो महादेवः सर्वमेधे महाक्रतौ ।
जुहाव सर्वभूतानि स्वयमात्मानमात्मना"
"महादेवः सर्वमेधे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव"

अकामः सर्वकामो वा मोक्षकाम उदारधीः।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्"
इति कामिनामपि विष्णवर्चनमेव मुख्यमुक्तम्।
तथा चतुर्थे द्वितीयेऽध्याये-
"भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम्।
(ख) भवव्रतधरा ये च ये च तान्समनुव्रताः॥
पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः।
नष्टशौचा मूढधियो जटाभस्मास्थिधारिणः॥
तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम्।
विगृह्य यात पाषण्डाः! दैवं वो यत्र भूतराट्"
इति शिवभक्तानां वैष्णवनिन्दकानां पाषण्डत्वादिकमुक्तम्।
षष्ठे च नवमेऽध्याये—
"अविस्मितं तं परिपूर्णकामम्।
स्वेनैव लाभेन समं प्रशान्तम्॥
विनोपसर्पत्यपरं हि बालिशः।
श्वलाङ्गलेनाऽतितितर्त्ति सिन्धुम्"
"वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः।
एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः"

इति।—श्रीनारसिंहपुराणे च—
"ब्रह्मादयः सुराः सर्वे विष्णुमाराध्य ते पुरा।
स्वं स्वं पदमनुप्राप्ताः केशवस्य प्रसादतः"
इति। अथ श्रीविष्णुपुराणे—
"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम्"
इति। श्रीभागवते चतुर्थे—
"अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाहं विबुधाः कलात्यये"। इति

(ख) मुमुक्षुभिरभजनीय-शिवादिदेवताभजने पाषण्डित्वप्रापित-रूपानर्थान्तरञ्च भागवतवचनेनाह—भवव्रतधरा ये चेत्यादिना।

इति च देवतान्तराणां मुमुक्ष्वपेक्षितफलाशक्तत्वमुक्तम्। हरिवंशे च घण्टाकर्णोपाख्याने रुद्रस्य मोक्षदानासामर्थ्यं स्फुटतरम्।

तथा दशमे—

"देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम्"

इत्याद्यध्यायद्वयेन परत्वाभावादनुपास्यत्वं स्पष्टतरम्। एवञ्जातीयकानि वचनानि पुराणादिपरिशीलनकुशलानां स्फुटानीति विस्तरभयाद् विरम्यते। वैष्णवधर्मावश्यकतायाश्च वासिष्ठस्मृत्याद्यकृत्रिमत्वसमर्थनादेव प्रामाणिकत्वं समर्थितम्, तथापि तुष्यत्विति न्यायेन त्वत्सम्प्रतिपन्नप्रामाण्यकेषु भागवतादिषु तत्सम्वादवचनानि लिख्यन्ते—

भागवते दशमे चत्वारिंशत्तमेऽध्याये—

"अन्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते।
यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्येकमूर्त्तिकम्"

इति पाञ्चरात्रोक्तचक्रधारणादिकमुक्तम्। भारते भीष्मपर्वणि "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः" इत्यादि पूर्वमेव लिखितम्। नारायणीयञ्च सर्वं पञ्चरात्रप्रशंसापरमेवेत्युपेक्षणीयम्। हरिवंशे च—

"नानादेशसमुद्भूता ब्राह्मणाः क्षत्रिया विशः।
चक्राङ्किताः प्रवेष्टव्या यावदागमनं मम"

इति। तथा विष्णुपुराणे तृतीयेंऽशे सप्तमेऽध्याये—

"कथय मम विभो समस्तचिन्हम्।
हरिचरणस्मृतिधर्मलक्षणानि"

इति यमभटानां प्रश्नं वैष्णवलक्षणविषयकमुपक्षिप्य—

"वैष्णवं द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं शुभम्।
शङ्खचक्रादिभिर्बाह्यमान्तरं वीतरागता"

'सच्छास्त्रपरिपन्थिन' इत्यादिकमेव पाषडिलक्षणम्, अत एव ये नष्टशौचा मूढधियो जटाभस्मादिधारिणस्ते सच्छास्त्रपरिपन्थिनो भवन्त्येवेति प्रत्यक्षमनुभूयते। अत एव ते वसिष्ठहारीतपराशरादिस्मृति-भारतभागवतपञ्चरात्रादिसात्त्विकशास्त्राणां कल्पितत्वम्

इति पाद्मोक्तप्रक्रियामनुरुध्य "न चलति निजवर्णधर्मतो यः सममतिः" इत्यादिना वर्णाश्रमधर्मानुष्ठाननामस्मरणकामक्रोधराहित्यभगवद्ध्यानादिबाह्याभ्यन्तरचिह्नान्युक्त्वा।

"वसति मनसि यस्य सोऽव्ययात्मा।
पुरुषवरस्य न तस्य दृष्टिपाते॥
तव गतिरथवा ममास्ति चक्र-
प्रतिहतवीर्य्यबलस्य (१) सोऽन्यलोक्यः"

इति चक्रधारणं बाह्यचिन्हमुक्तम्।—एवं बहूनि वचनानि चक्रोल्लासादिषूपन्यस्तानि (ग) इति नेह तन्यते।

एतेन "शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः। स जीवन्नेव चाण्डालः सर्वधर्मबहिष्कृतः" इति पराशरस्मृतिवचनं विलिख्य ये चैतेषां पाषण्डशास्त्राणां प्रामाण्यमधिगच्छन्ति ते कथञ्चिच्छूद्रशिष्यत्वगर्हामगणयित्वा चक्रादिधारणेन स्वस्य चाण्डालत्वं दूरीकुर्वन्तु नाम किन्त्वेतद्धर्मस्याल्पकालिकत्वात् एतत्पूर्वपुरुषाणां चक्राद्यधारणेन चण्डालत्वात् तद्वंश्या एवैते इदानीं चक्रादिधारणाद्ब्राह्मणोत्तमा भवन्तीत्याश्चर्य्यमित्युक्तमपि निरस्तम्। तद्वचनस्य न हि निन्दा न्यायेन वैष्णवधर्मस्तुतिपरत्वस्योक्तत्वात्। वैदिकशास्त्राणां महर्षिप्रणीतानां पाषण्डशास्त्रत्वोक्तिश्च तव वेदबाह्यत्वात् महर्षिदूषकत्वाच्च चण्डालादप्यधमत्वं प्रकटयति। शूद्रशिष्यत्वगर्हामिति च पूर्वमेव ध्वस्तम्। शठकोपादेः पञ्चसंस्कारपरम्परापरिगणनाभावकथनात्। अर्थग्रहणन्तु न दोषाय "अन्त्यादपि परं धर्मम्" इति मनूक्तेः।

---

वदन्ति। यथाकथञ्चित्सच्छास्त्रदूषकत्वमेव हि सच्छास्त्रपरिपन्थित्वम्। किं बहुना श्रीविष्णोरपूजनमेव पाषण्डिनां मुख्यः परिचयः तथैवोक्तं द्वादशे तृतीयाध्याये "कलौ न राजन्! जगताम्परं गुरुं त्रिलोकनाथानतपादपङ्कजम्॥ प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाषण्डविभिन्नचेतसः" इति। (१)अन्यलोक्यो विष्णुलोकाद्धीनत्वस्मल्लोकार्हः।

(ग) इति नेह तन्यते, इति हेतोरिह विस्तारो न क्रियत इत्यर्थः।

किञ्च अर्थग्रहणाद्धीनशिष्यत्वं सूतगृहीतधर्मं ( घ ) शौनकादिमहर्षिसाधारणमिति न दूषणम् ।

ननु भागवते प्रथमे अष्टादशाध्याये—

"अहो वयं जन्मभृतोऽद्य हास्म ।
वृद्धानुवृत्त्याऽपि विलोमजाताः ॥
दौष्कुल्यमाधिं विधुनोति शीघ्रम् ।
महत्तमानामभिधानयोगः ॥
कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य"

इति सूतस्य भगवद्भक्त्या विलोमजन्मापगमेन जन्मान्तरप्राप्तिप्रतिसन्धानात्, न ततोऽर्थग्राहिणां शौनकादीनां विलोमजशिष्यत्वमिति चेत् तर्हि प्रकृतेऽपि दीयतां दृष्टिः किन्त्वित्यादिकं चैतद्धर्मस्याधुनिकत्वनिरासादेव निरस्तम् । अत उक्तरीत्या चण्डालादधमा अपि भवादृशा वैष्णवधर्मपरिग्रहात्पूता एव भवन्तीति नाश्चर्यमिति दर्शयिष्यते । नहि गङ्गा भवादृङ्महापातकिनोऽपि न पावयति ।

यत्तु—

या वेदबाह्याः स्मृतयः याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥
उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् ।
तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च"

( घ ) शौनकादिमहर्षिसाधारणमिति, अत्रादिपदेन त्रय्यारुणिप्रभृतयो गृह्यन्ते तथोक्तं द्वादशे सप्तमाध्याये शौनकं प्रति सूतेन—

"एत आथर्वणाचार्याः शृणु पौराणिकान्मुने ! ॥
त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ।
वैशम्पायनहारीतौ षड्वै पौराणिका इमे ॥
अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात्" इति ।

तथा विष्णुपुराणे ( अं० ३ अ० ६ )—

"प्रख्यातो व्यासशिष्योऽभूत्सूतो वै रोमहर्षणः ।
पुराणसंहितां तस्मै ददौ व्यासो महामतिः ॥
सुमतिश्चाग्निवर्चाश्च मित्रायुः शांसपायनः ।
अकृतव्रणसावर्णी षट् शिष्यास्तस्य चाभवन्" इति ।

इति च श्लोकावुक्त्वा तस्मान्मन्वादिनिषिद्धाधुनिकवचनानि नरक-
भीरुभिर्हेयानीत्युक्तम् । तद्युक्तमेव अत एव हि भवादृशवेदकण्टक-
वचनानि सर्वबहिष्कार्याणीत्यस्माभिरुच्यते ।

एतेन श्रुतिस्मृत्यादिभिः परमाराध्यत्वेनोक्तस्य शिवस्य पूजां
न कुर्वन्ति शूद्रादिजातीयशठकोपादीनां प्रतिमास्थापनपूर्वकं पूजादिकं
कुर्वन्ति तत्राप्येतैर्दिव्यसूरिप्रभावदीपिकायां स्वमतानुसारेण बहुल-
तरं प्रमाणानि लिखितानीत्यपि निरस्तम् । शिवस्य परमाराध्यत्व
प्रतिपादकश्रुत्याद्यनुपन्यासात् अस्माभिरनाराध्यत्वस्य विस्त-
रेण निरूपणाच्च । शठकोपादिपूजनं तु गुरुपूजनस्य भागवता-
द्यावश्यकत्वोक्तेर्युक्तमेव । तथा ह्येकादशे सप्तविंशतितमाध्याये
भगवदर्चां प्रकृत्य—

"दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् ।
स्वे स्वे स्थाने त्वभिमुखान् पूजयेत्प्रोक्षणादिभिः"

इत्युक्तम् । अन्यानि च प्रमाणानि प्राचीनग्रन्थेषु द्रष्टव्यानि
विस्तरभयान्न लिख्यन्ते ।

यत्तु तत्र स्वमतानुसारेण लिखितमिति तद्युक्तमेव नहि वैदिकशिरो-
मणयो भवादृगवैदिकमतानुसारेण विलिखेयुः नचैवमुक्तवचनात्
दुर्गाद्यर्चनप्रसङ्गः अप्राधान्येनेष्टत्वात् अत एव हि स्वेस्वे स्थान इत्यु-
च्यते एतेन देवतान्तरस्यापि सहपाठात् गुरुतुल्यपूजापत्तिर्निरस्ता स्वे-
स्वे स्थान इत्युक्त्या तत्तद्योग्यतानुसारेणार्चनद्योतनात देवतान्तराणां
रजस्तमःप्राधान्यनिरूपणाच्च शूद्रादित्वादनर्चनीयत्वं तुज्ञानेन शूद्रत्वा-
पगमोक्त्या निरस्तं निरसिष्यते च । अत एव "प्रदाक्षिणमथाकृत्वा"
इति धर्मव्याधं प्रति कौशिकस्य प्रदक्षिणाद्युच्यते ।

(ङ) किञ्च क्षत्रियादिवंश्यानां तदानीन्तनवसिष्ठाद्यनुग्राह्याणाम-
पि रामकृष्णादीनामिदानीन्तनैरर्चा क्रियते अतस्तत्समशीलशठको-
पादिपूजनमपि युक्तमेव किञ्चेदानीं मुक्तानां तेषां न जातिविवेच-
नशङ्कालेशोऽपि ।

---

(ङ) अथ शठकोपादीनां प्रतिमापूजने लौकिकन्यायं प्रति-
बन्द्यनुगृहीतमुदाहरति—किञ्चेत्यादिना । अयमभिप्रायः नहि

यत्तु—

"सर्वमेव कलौ शास्त्रं यस्य यद्वचनं द्विज ! ।
देवताश्च कलौ सर्वाः सर्वः सर्वस्य चाश्रमः"

तदानीन्तना वशिष्ठवामदेवादयो गर्गादयो वा शिष्टाः क्षत्रियादिवंश्यानां रामकृष्णादीनामुच्छिष्टमन्नादिकं बुभुजिरे इत्यत्रास्ति किमपि प्रमाणम् । तथापीदानीन्तना वसिष्ठादिवंश्या एव ब्राह्मणोत्तमा रामकृष्णादिप्रतिमानिवेदितमुच्छिष्टमन्नादिकं विवादमन्तराभुञ्जत एव । तथा च रामकृष्णादीनामपि पूज्यानां परमसमर्थतदानीन्तनवसिष्ठादीनां पूजनं विहाय यद्वैलक्षण्यं ज्ञात्वा युष्माभी रामकृष्णादयः पूज्यन्ते तादृशमेव किमपि वैलक्षण्यं ज्ञात्वाऽस्माभिरप्येते पूज्यन्त इति नास्ति प्रश्नावकाशः । ननु रामकृष्णादीनां भगवदवतारत्वरूपवैलक्षण्यज्ञापकवचनबलात्तदर्चायां प्रवृत्तिरिति चेत्, तर्ह्येतेषामपि कुमुदशार्ङ्गचक्रादिदिव्यसूर्यवतारबोधकवचनजातस्य भार्गवपुराणादिषु सत्त्वादेतदर्चाप्रवृत्तिरित्यवेहि । यथा चेदानीन्तनै रामकृष्णादीनाम्भगवदवतारं तत्प्रतिमापूजनञ्चाऽननुमन्वानैर्नास्तिकै रामकृष्णाद्यवतारतत्प्रतिमापूजनबोधकवचनेष्वप्रामाण्ये जल्पितेऽपि नहि भवन्तो रामकृष्णादिपूजनतो विमुखीभवन्ति, तथा तत्समशीलैर्भवद्भिरेतेषामवतारतत्पूजनबोधकवचनजातस्य कृतेऽप्यप्रामाण्यजल्पने न वयं ततो विमुखीभवाम इति ।

नच भार्गवपुराणादीनां यौष्माकीणत्वेन तत्त्वत एव न तद्वचनानां प्रामाण्यमिति वाच्यम्, पद्मपुराणपातालखण्डे ( अ० ११५ ) उपपुराणगणनाप्रकरणे तस्याऽपि परिगणितत्वात् । तथा हि—

"तथा चोपपुराणानि कथयिष्याम्यतः परम् ।
आद्यं सनत्कुमाराख्यं नारसिंहमतः परम् ॥

तृतीयमाण्डमुद्दिष्टं दौर्वाशजमथैव च ।
नारदीयमथाऽन्यच्च कापिलं मानवं तथा ॥

तदौशनसम्प्रोक्तं ब्रह्माण्डञ्च ततः परम् ।
वारुणं कालिकाह्वानं माहेशं साम्बमेव च ॥

इति विष्णुपुराणवचनमुदाहृतम्। तद् "देवताश्च कलौ सर्वाः" इत्युक्त-ब्रह्मरुद्रादिदेवतान्तरप्राधान्यमिदानीन्तनमुपलभ्य "सर्वमेव कलौ-

सौरं पाराशरञ्चैव मारीचं भार्गवाह्वयम्।
कौमारञ्च पुराणानि कीर्त्तितान्यष्ट वै दश" इति।

यदि च पद्मपुराणमपि यौष्माकमिति तत्परिगणितपुराणवचनानामपि न प्रामाण्यमिति ब्रवीषि। तदा तु कैलासतन्त्र-मुण्डमालातन्त्र-लिङ्गार्चनतन्त्र-तोडलतन्त्रादिकतिपयतामसग्रन्थान्विहाय सशिरस्कवेद-तदुपबृंहणतत्तत्स्मृतीतिहासपुराणानां सकलस्य पञ्चरात्रस्य चास्मदीयत्वेनाऽस्मत्पक्षस्यैव प्राबल्यम्। यदि यूयमप्युदरम्भरित्वमपहाय प्रतिया सप्तजन्मपर्यन्तं शिवभक्तिं करिष्यथ तदा सप्तजन्मानन्तरं वैष्णवताप्राप्तौ सत्यामेतत्सर्वं प्रमाणजातं यौष्माकीणमपि भविष्यति। तथैवोक्तमपि—

"शङ्करस्य तु यो भक्तः सप्तजन्मान्तरं नरः।
तस्यैव तु प्रसादेन विष्णुभक्तः प्रजायते॥
त्रिभिः प्रजापतेर्भक्तः सप्तभिः शङ्करस्य तु।
विंशत्याऽग्नीन्द्रसूर्यादे-र्विष्णुभक्तः प्रजायते"
इति सर्वं समञ्जसम्।

नच प्रवृत्तिनिवृत्त्योर्वचनसत्त्वनिबन्धनत्वाद्देवप्रतिमास्थापनपूजनादिप्रतिपादकवचनोपलम्भेऽपि भक्तानां गुरूणाञ्च प्रतिमानिर्माणपर्वकस्थापनपूजनोत्सवविधायकवचनाऽनुपलम्भाद्भक्तादिप्रतिमापूजनादिकं निर्मूलमिति वाच्यम्—नारदपञ्चरात्रपाद्मसंहिताक्रियापादद्वात्रिंशदध्यायवचनजातेनोक्तार्थप्रतिपादनात्।
तथा हि—

"प्रतिकायञ्च भक्तानां कृत्वा स्थापनमाचरेत॥
स्वमन्त्रं स्वामिमन्त्रं वा यथालाभं शिलादिभिः॥
कृताञ्जलिपुटं सौम्य-स्थितमासीनमेव वा॥
यथावर्णं यथारूपं यथाचाश्रमधार्मिणम्॥
यथावयोरूपधरं पद्मपीठे प्रतिष्ठितम्॥
कृतलक्षणसम्पन्नं शिल्पिभिः सपरीक्षितम्॥

शास्त्रं यस्य यद्वचनम्" इति तेन सहपाठात् मद्वचनमपि शास्त्रं भविष्यतीति अभिसन्धानेन त्वयैतानि पत्राणि लिखितानीति सूचयति

यद्वा कर्मानुरूपेण प्रतिकार्यं प्रकल्पयेत् ॥
स्थापयेदङ्कुरानादौ कल्पयित्वा शुभे दिने"
इत्यारभ्य—
"दीक्षागुरोश्च प्रतिमां स्थापयेन्मन्त्रसिद्धये"
इति मध्ये दीक्षागुरुप्रतिमास्थापनविधानस्य—
"स्थापनं प्रतिकायानां ब्रह्मन्नैवाऽत्र संशयः ॥
प्रत्यहञ्चार्च्चयेद्धीमा-नुपचारैः पृथग्विधम् ॥
कर्त्तव्यः सूत्सवश्चाऽपि ध्वजारोहणवर्जितः ॥
न होमो न बलिस्तीर्थं स्वतन्त्रे विधिरीदृशः ॥
पारतन्त्र्ये तु भक्ताना-मुत्सवः कमलासन ! ॥
देवस्योत्सवमध्ये तु प्रक्रान्ते वाऽप्यनुष्ठिते ॥
तस्मिन्कार्ये कृते तस्मिन् प्रीयते च जनार्दनः ॥
राज्ञो राष्ट्रस्य कर्त्तुश्च ब्राह्मणानां गवामपि ॥
जायते भूयसी सम्प-दुत्सवे विहिते सति"

इत्यन्तं तेषां भक्तानां गुरूणाञ्च प्रतिष्ठोत्सवादिविधानस्य च महता विस्तरेण प्रतिपादनं दृश्यते ।

एवं जयन्त्यादिनिर्णयवदेतेषाञ्जन्मोत्सवनिर्णयोऽपि पञ्चरात्र-शास्त्रे विहितः । यथा—

"अंशावतारनक्षत्रं (+) सङ्गमस्पर्शमात्रतः ।
ग्राह्यं स्यादितरेषान्तु यावत्सङ्गमसङ्गमः ॥
मध्याह्नस्पर्शिनी पूर्वा तारा स्यात्परतो दिने ।

(+) "प्रातः सङ्गममध्यान्हा अपराह्णस्तथैव च ॥
सायाह्नः पञ्चकालास्ते ज्ञेयाः षड्घटिमानतः"

इत्यत्रोक्तसङ्गमकालस्य पूर्वतः परतो वा यस्मिन् दिने नक्षत्रेण स्पर्शमात्र स्यात्तस्मिन्नेव दिने अंशावताराणां जन्मनक्षत्रं ग्राह्यम् इतरेषामनंशानान्तु पूर्वाचार्याणां सकलसङ्गमकालस्य नक्षत्रेण सह सङ्गमो ग्राह्य इत्यर्थः ।

अन्यथा प्रकृते तदनुपयोगात् प्रत्युत पूर्वोक्तदेवतान्तरपारम्यव्याघातकत्वाच्च ।

(च) "यदपि कणादं गौतमं शक्तिम्" इत्यारभ्य "दशैतान् तामसानृषीन्" इति पाद्मोत्तरखण्डवचने वायुपुराणादिषु विशुद्धसत्त्वप्रधानत्वेनोक्तानां ऋषीणां तामसत्वोक्तिरपि पाषण्डत्वसूचिकेत्युक्तम् । तदपि पाद्मोत्तरखण्डप्रणेतृमहर्षिदूषणारूपेण स्वस्यैव पाषण्डत्वसूचकम्, तद्वचनयोः कालभेदेनाविरोधात् । नहि कणादं गौतममित्यादिरुद्रोद्देश्यकभगवद्वचने कणादादीनां स्वाभाविकं सार्वदिकश्च तामसत्वमुच्यते, किन्तु रुद्रावेशप्रयुक्तवेदविरुद्धन्यायशास्त्रादिनिर्माणकालिकमेव । अत एव "दशैतान् तामसान् ऋषीन्" इत्यनन्तरं त्वच्छक्त्यावेशितान्कृत्वेत्युच्यते त्वच्छक्त्यावेशात् तामसान्कृत्वेत्यर्थः । अतः स्वाभाविकतदितरकालिकसात्विकत्वप्रतिपादकं वायुपुराणादिवचनानिति न विरोधः । नचैतद्वैतमाक्षीनां दूषणम् । पारवश्यप्रयुक्ताकृत्यकरणस्यादोषत्वात् तेषामाधिकारिकतया तत्कार्य्यावश्यकत्वाच्च । नहि जन्तुमारणाधिकृतस्य कालरुद्रस्य तत्कृत्यं दोषावहम् ।

यत्तु "मात्स्यं कौर्मं तथालैङ्गम्" इत्यादिश्लोके "मानवी याज्ञवल्क्यी च" इत्यादिश्लोकयोश्च क्लीबस्त्रीलिङ्गाभ्यां निर्दिष्टानां पुराणस्मृतीनां "सात्त्विका मोक्षदाः प्रोक्ता" इत्याद्यग्रिमश्लोके पुंलिङ्गेन परामर्शायोगादेतानि वचनानि बालरचितानीत्युक्तम् । तत्तुच्छम् नारायणीये हयशिरउपाख्याने "तावभ्यधावतां श्रेष्ठौ तमोरजगुणान्वितौ" इति । भागवते "यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्म

---

सङ्क्रमे स्याज्जन्मतारा कला मात्राऽपि सा मता ॥
जन्मर्क्षे सङ्क्रमस्पृष्टं भवेद् ग्राह्यं परे दिने ॥
यावत्सङ्क्रमकं ग्राह्य-मनंशानां विशेषतः"
इति नास्ति वैष्णवसिद्धान्तेष्वशास्त्रीयाचरणशङ्कावकाशलेशोऽ
पीति सुपरिनिष्ठितैर्विद्वद्भिर्ज्ञायत एव ।
(च) यदपीति । अत्रत्यो विस्तरोऽस्मदीयवेदान्तसारभूमिकायां
द्रष्टव्यः ।

दीपमतितितर्षितान्तमोऽन्धम्" इत्यादिप्रयोगैर्भारतादेरपि बालरचितत्वापत्तेः। अत एतादृशहेत्वाभासैरार्षग्रन्थानां कृत्रिमत्वं सिषाधयिषुस्त्वम्

योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्द्विजः।
स साधुभिर्बहिष्कार्य्यो नास्तिको वेदनिन्दकः"

इति मनुस्मृतिद्वितीयाध्यायस्थवचनविषयीभवसि। वस्तुतस्तु "सात्विका मोक्षदायकाः" इत्यत्र ग्रन्था इति विशेष्याध्याहारान्न कश्चिद्विरोधः।

एतेन मात्स्यादीनां तामसत्वेन नरकप्रदत्वपरपूर्वोक्तवचनप्रामाण्याभ्युपगन्तृभिर्मात्स्यादिकर्त्तारो मुनयो वञ्चका इति वक्तव्यम् तैः फलस्तुतिषु तेषां श्रेयःसाधनत्वोक्तेः। तथाहि "इदं पुराणं परमं पुण्यं वेदैश्च सम्मितम्"इति "यदेतत्सर्वशास्त्राणां पुराणं मूर्द्ध्नि संस्थितम्"इति "मुख्यं पुराणेषु यथैव मात्स्यम्"इति च मात्स्यं स्तुतम्। एवमन्येषामपि स्तुतिर्द्रष्टव्येत्युक्तमपि निरस्तम्। तदुपदेष्टॄणामृषीणामुक्तरीत्या तत्काले रुद्रावेशपरवशत्वात्, नहि पारवश्येनानृतं वदन्वञ्चको भवति। यद्वा स्तावकवचनानामयमर्थः वेदैस्सम्मितं तामसाधिकारिकवेदैः सम्मितम्। सर्वशास्त्राणां मूर्द्ध्नि संस्थितं तामसशास्त्रेषु श्रेष्ठं मुख्यम्। पुराणेषु तामसपुराणेषु मुख्यमिति। अथवा "वेदैः सम्मितम्" तामसानां वेदतुल्यं तामसानां सर्वशास्त्रश्रेष्ठं तामसानां पुराणेषु मुख्यमित्यर्थः। शास्त्राणामापातप्रतीतेऽर्थे परस्परविरुद्धानामधिकारिभेदेनैव निर्वाह्यत्वात्। गीतै हि भगवता "त्रैगुण्यविषया वेदाः"इत्युक्त्वा—

"यावानर्थ उदपाने सर्वतः सम्प्लुतोदके।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः"

इति ज्ञानिनः सात्विकस्य वेदेष्वपि स्वोपयुक्तांशमात्रग्रहणम्। अतः सात्विकैर्मुमुक्षुभिर्वैष्णवैस्तामसशास्त्राणामनुपादेयत्वमृषीणामवञ्चकत्वञ्चोपपन्नम्। अथवा उक्तस्तावकवचनान्यविरुद्धांशमात्र-

पराणीति नेयम् । यतस्त्वया पुराणश्रेष्ठतयोपपादित एव मात्स्ये सप्तचत्वारिंशत्तमेऽध्याये—

"सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विभोः ॥
तद्वदग्नेश्च माहात्म्यं तामसेषु शिवस्य च ।
सङ्कीर्णेषु सरस्वत्याः पितॄणाञ्च निगद्यते"

इति । तथा अन्तिमाध्याये—

"सङ्कीर्णास्तामसाश्चैव राजसाः सात्त्विकास्तथा ।
रजस्तमोमयास्तद्वत् त्रयस्त्रय उदाहृताः ॥
सङ्कीर्णेषु सरस्वत्याः पितॄणां व्युष्टिरुच्यते ।
अग्नेः शिवस्य माहात्म्यं तामसेषु दिवाकरे ॥
राजसेषु तु माहात्म्यमधिकं ब्रह्मणः स्मृतम् ।
यस्मिन्कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा ॥
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते ।
सात्त्विकेष्वधिकं तद्वद्विष्णोर्माहात्म्यमुत्तमम् ॥
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्",

इति च ब्रह्मरुद्रादिपारम्यपरपुराणानां रजस्तमोमूलकत्वेन तन्निष्ठानां मोक्षानर्हत्वं नारायणपारम्यपरपुराणानां सत्त्वमूलकतया तन्निष्ठानामपुनरावृत्तिश्चोच्यते। यद्वा उक्तस्तावकवचनानि परमतात्पर्यमवलम्ब्य वर्णनीयानि सर्वशास्त्राणां परमतात्पर्यं सर्वशरीरिणि नारायण एवेति ह्युक्तम् । नारायणीये निष्ठानिर्णयाध्याये—

"साङ्ख्यञ्च योगश्च सनातने द्वे ।
वेदाश्च सर्वे निखिलेन राजन् ! ।
सर्वैः समस्तैर्ऋषिभिर्निरुक्तो ।
नारायणो विश्वमिदं पुराणः"

इति। (छ) अस्तु वा ऋषीणामपि वञ्चकत्वं तेषामाधिकारिकतया वञ्चनस्यादोषत्वात्। श्रूयते हि तत्र तत्र ब्रह्मवेत्तॄणामाप्ततयाप्रसिद्धानामपि बृहस्पत्यादीनां वञ्चकत्वम्। तथाहि मात्स्ये एव त्रयोविंशाध्याये—

"गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः।
जिनधर्मं समास्थाय वेदबाह्यं सवेदवित्"

इत्युक्तम्। तथा हरिवंशे रजिपुत्रवृत्तान्ते बृहस्पतिं प्रकृत्य—

"तेषाञ्च बुद्धिसम्मोहमकरोद्द्विजसत्तमः।
नास्तिवादार्थशास्त्रं हि धर्मविद्वेषिणं परम्॥
ते तं बृहस्पतिकृतं शास्त्रं श्रुत्वाल्पचेतसः।
पूर्वोक्तधर्मशास्त्राणामभवन् द्वेषिणस्सदा"

इत्युक्तम्। एवमन्यत्रापि द्रष्टव्यमिति कृतं पल्लवितेन।

यदपि—

"नातिसङ्गं परिचरेत्पित्रादीनप्यवैष्णवान्।
ब्रह्मरुद्रादिगीशार्कतच्छक्तिप्रसवादयः॥
नित्यमभ्यर्चने वर्ज्याः"।

इत्यादिभरद्वाजसंहितावचनस्य "तेषां त्रयाणां शुश्रूषा परमं तप उच्यते" इत्यादिमातृपितृपनेतृशुश्रूषास्तुतिपरमनुवचनेन—

"ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मैत्रवारुणैः।
तल्लिङ्गैरेव मन्त्रैस्तान्पूजयेन्नित्यमादरात्"

इति योगियाज्ञवल्क्यवचनेन च विरोध इत्युक्तम्। तदपि मन्दं यतो द्वितीय एवाध्याये मनुना—

"धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः"

(छ) मात्स्यादिकर्त्तारो मुनयो वञ्चका इति वक्तव्यमित्यत्र मुनीनां वञ्चकत्वकथनरूपा याऽऽपत्तिर्दत्ता तामिदानीमिष्टापत्त्या स्वीकरोति-अस्तु वेति। साक्षाद्भगवतोऽप्याश्रितरक्षणरूपप्रयोजनाय

इति त्रिवर्गस्य श्रेयस्त्वमुक्त्वा मातृपितृशुश्रूषादिधर्मा उच्यन्ते अतस्त्रैवर्गिकपरेण मनुवचनेन मुमुक्षुपरस्य "नातिसङ्गम्"इत्यस्य न विरोधः। अत एव हि "एवञ्च बुभुक्षून्प्रत्युपदेशो न मुमुक्षून्"इति मुक्तावल्यपि दृश्यते। अतो वैष्णवस्य मुमुक्षोरवैष्णवसङ्गस्य निषिद्धतया पित्रादेरवैष्णवत्वे तेषां गुरुत्वेन तत्परिचर्याया आवश्यकत्वात "नातिसङ्गं परिचरेत्" इत्युच्यत इति। याज्ञवल्क्यवचनविरोधोऽपि ब्रह्मादेरावरणत्वेनार्चनाङ्गीकारादेव निरस्तः आदरादिति यथोचितादरादित्यर्थः। नहि लोके ब्रह्मरुद्रवत्तत्सहपठितो वरुणोऽप्याद्रियते अनुभवविरोधात्।

(ज) यत्तु "न शूद्रा भगवद्भक्ता"इति "श्वपचोऽपि महीपाल" इति च श्लोकयोः "उत्पत्तिरेव विप्रस्य" इति श्लोकाभ्याम् "अविद्वांश्चैव विद्वांश्च" इति "एवं यद्यप्यनिष्टेषु" इति च वचनाभ्यां मनुस्मृतिगताभ्यां विरोधः। किञ्च "न शूद्रा" इत्यादिवचनस्य वर्णसाङ्कर्यापादकत्वमेव। श्रुतिस्मृत्यादिषु (झ) विष्णुभक्तेरभक्तेर्वा इहैव जन्मनि ब्राह्मणत्वशूद्रत्वापादकतयानुक्तेः तथा व्यवहारादर्शनाच्च तथाऽव्यवहारश्च विष्णुपुराणे निषिध्यते। "चतुर्णां यत्र वर्णानां मैत्रयात्यन्तसङ्करः" इत्यादिना।

---

यदा मोहिनीरूपेणाऽऽसुरवञ्चकत्वं तदा तदाज्ञानुविधायकशिवादीनामृषीणां वा किमु वक्तव्यम्।

(ज) सामान्यविशेषशास्त्रतात्पर्यानभिज्ञत्वेन कतिपयविशेषशास्त्रवचनानां मनुवचनैर्विरोधमवगम्य शङ्कमानस्य शङ्का उपन्यस्यति—यत्त्वित्यादिना।

(झ) विष्णुभक्तेरित्यादि। अत्र भ्रान्त्या ग्रन्थापहारकपाठस्त्वेवं "विष्णौ भक्तेरभक्तेर्वा इहैव जन्मनि ब्राह्मणत्वापादकत्वेनाऽनुक्तत्वात्, तथा व्यवहारदर्शनाच्च"इति अत्र "क्रोधाद्भवति सम्मोहः" इति गीतोक्तक्रमानुसारेण जायमानवैष्णवविषयकद्वेषेण बुद्धेर्नाशाद्विवेकलेशोऽपि नावशिष्ट इति प्रतीयते। कथमन्यथा विष्णावभक्तेरपि ब्राह्मणत्वापादकत्वं ब्रूयात। अत एव तस्य दुरभिप्रा-

"ब्राह्मणाद्याश्च ये वर्णाः स्वधर्मादन्यतो मुखाः ।
यान्ति ते नग्नसंज्ञां तु हीनकर्मस्ववस्थिताः"

इत्यादिना च । किञ्च "श्वपचोऽपि" इतिश्लोके पूर्वार्द्धोत्तरार्द्धयोरन्यतरस्मिन्नन्यतरार्द्धस्यार्थापत्त्यैव सिद्धेरन्यतरवैयर्थ्यं स्यात् अतोऽप्येतानि वचनानि कल्पितान्येवेत्युक्तम् । (ञ) तत्रोत्पत्तिरेव विप्रस्येत्यादिमनुवचनद्वयेन न विरोधः । तत्र हि ब्राह्मणधर्माणामस्मिञ्छास्त्रे प्राथम्यं किन्निबन्धनम् कथञ्चात्रब्राह्मणस्यैव क्षत्रियादेरध्ययनेऽधिकृतस्याप्यध्यापनाद्यनधिकार इत्यत्र तदुभयं वक्तुं ब्राह्मणं स्तौति मनुः । अत एव (ट) तदुपक्रमधर्माभिधानत्वाच्चाऽस्य शास्त्रस्य ब्राह्मणस्य स्तुतिमाहेति मुक्तावली दृश्यते अतः स्तुतिरूपत्वान्नोत्पत्तिमात्रेणाधिक्यमत्र सिध्यति अन्यथा सर्वेषां ब्राह्मणानामुत्पत्त्यविशेषाच्छ्रैष्ठ्याविशेषे—

"ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्त्तारः कर्तृषु ब्रह्मवेदिनः"

इति ब्राह्मणेष्वपि श्रैष्ठ्यतारतम्यपरतदव्यवहितपूर्ववचनविरोधापत्तिः । वासिष्ठादीनामिदानीन्तनब्राह्मणाविशेषापत्तिश्च । अतो विप्रेषु श्रैष्ठ्यनियामकतया मनूक्तं ब्रह्मवेत्तृत्वमेवेतरत्राऽपि तन्नियामकम् । इयांस्तु विशेषः न तादृशं शूद्रादेर्ब्रह्मविदः श्रैष्ठ्यं यादृशं विप्रस्य ब्रह्मविद इति अतएवापस्तम्बोपि "सहि विद्यातस्तञ्जनयति तच्छ्रेष्ठञ्जन्म" इत्युत्पत्तितःश्रैष्ठ्यं निषेधति ।

---

यद्यत्वेऽपि तन्मुखस्था सरस्वती शास्त्रेषु तथा व्यवहारं प्रदर्शयितुम् "तथा व्यवहारदर्शनाच्च" इति वदति ।

(ञ) समाधत्ते—तत्रोत्पत्तिरेवेत्यादिना । विरोधमेव परिहरति—तत्र हीति । अस्मिञ्शास्त्रे ब्राह्मणधर्माणां प्राथम्यं किन्निबन्धनं कथञ्चाऽध्ययनेऽधिकृतस्याऽपि क्षत्रियादेर्ब्राह्मणस्यैवाऽध्यापनाद्यनाधिकारः । क्षत्रियादिर्ब्राह्मणस्यैवाऽध्यापनादीन्न कुर्य्यात इत्येतदुभयं वक्तुमित्यर्थः ।

(ट) तदुपक्रमधर्माभिधानत्वात् । तेषां ब्राह्मणानामेव उपक्रमे प्रारम्भे धर्माणामभिधानत्वात्कथनादित्यर्थः ।

ननु, "अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्"

इति।

"एवं यद्यप्यनिष्टेषु वर्त्तन्ते सर्वकर्मसु।

सर्वथा ब्राह्मणाः पूज्याः"

इति चोक्तवचनाभ्यामविदुषो विकर्मणोऽपि विप्रस्य पूज्यत्वमुच्यते? सत्यमुच्यते तत्तु ब्राह्मणस्य बहुलतरदण्डनिवारणार्थं ब्राह्मणस्तुतिपरम्। अत एव दण्डप्रकरणे चेयं ब्राह्मणस्तुतिः ब्राह्मणानामपराधिनामपि लघुदण्डप्रयोगनियमार्थेति स्तुत्यर्थत्वाच्चाऽस्य न यथा श्रुतार्थविरोधः शङ्कनीय इति च मुक्तावली दृश्यते। अत एव च मनुर्द्वितीयाध्याये—

"यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः।

यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति"

इत्यादिना स्वधर्म्मच्युतान्विप्रान्निन्दति। अतो मनुस्मृतिविरोधवर्णनं तदर्थानभिज्ञाननिबन्धनमेव।

(ठ) यदपि विष्णुभक्तेरभक्तेर्वा इहैव जन्मनि श्रुतिस्मृतिषु ब्राह्मणत्वशूद्रत्वापादकत्वानुक्तेरिति तत्र किन्नैवोच्यत इति विवक्षितम्? उतोक्तमपि वस्तुविरोधान्न तदर्थकमिति। नाद्यः यतो मनुर्द्वितीयाध्याये—

"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।

स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः"

इत्याद्याह। तथा अरण्यपर्वण्याजगरोपाख्याने। "ब्राह्मणः को भवेद्राजन्!" इति नहुषप्रश्नोत्तरतया—

"सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा।

दृश्यन्ते यत्र नागेन्द्र! स ब्राह्मण इति स्मृतः"

---

(ठ) अथ विष्णुभक्त्यभक्त्योरेवात्रैव जन्मनि वास्तविक ब्राह्मणत्वशूद्रत्वापादकत्वं द्रढयितुं तदीयशङ्काग्रन्थमुपादत्ते—यदपीति। समाधत्ते—तत्रेति। आपादकत्वानुक्तिं विकल्पयति—किमिति। किं शास्त्रेष्वापादकत्वं नैवोक्तमिति विवक्षितम्? अथवोक्तस्याऽपि

इति युधिष्ठिरवचनमुक्त्वा—

"शूद्रेष्वपि च सत्यञ्च दानमक्रोध एव च"

इति सत्याद्युक्तलक्षणस्य शूद्रेष्वतिव्याप्तिमाशङ्कमाने नहुषे—

"शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ॥
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः।
यत्रैतल्लक्ष्यते सर्प ! वृत्तं स ब्राह्मणः स्मृतः"

इति।

"यत्रैतन्न भवेत्सर्प ! तं शूद्र इति निर्दिशेत्"

इति तस्यापि लक्ष्यत्वेनाऽतिव्याप्तिं परिहृत्य—

"यदि ते वृत्ततो राजन् ! ब्राह्मणः प्रसमीक्षितः ॥
वृथा जातिस्तदायुष्मन् ! कृतिर्यावन्न विद्यते"

इत्याशङ्क्य—

जातिरत्र महासर्प ! मनुष्यत्वे महामते !
सङ्करात्सर्ववर्णानां दुष्परीक्ष्येतिमे मतिः।

इति सत्याद्यतिरिक्तं ब्राह्मण्यादि दुष्परीक्ष्यमित्युक्तम्। तथा तत्रैव कौशिकं प्रति धर्मव्याधः—

"शूद्रयोनौ हि जातस्य सद्गुणानुपातिष्ठतः ॥
वैश्यत्वं लभते ब्रह्मन् ! क्षत्रियत्वं तथैव च।
आर्जवे वर्त्तमानस्य ब्राह्मण्यमभिजायते"

इत्याह व्याचख्यौ च नीलकण्ठः गुणकृत एव वर्णविभागो न जातिकृत इति भाव इति। तत्रैव धर्मव्याधं प्रति कौशिकः—

"साम्प्रतञ्च मतो मेऽसि ब्राह्मणो नाऽत्र संशयः।
ब्राह्मणः पतनीयेषु वर्त्तमानो विकर्म्मसु ॥
दाम्भिको दुष्कृतप्रज्ञः शूद्रेण सदृशो भवेत्।

---

सोऽर्थो नेति। प्रथमपक्षं प्रतिक्षिपति-नाद्य इति। शास्त्रेषु नोक्तमिति तु न किन्तूक्तमेवेत्यर्थः मनुवचनं दर्शयति—य इति।

"यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः॥
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद् द्विजः"

इत्याह। तथा मोक्षधर्मे भृगुभरद्वाजसम्वादे—

"चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते।
सर्वेषां खलु वर्णानां दृश्यते वर्णसङ्करः॥
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः।
सर्वेषां न प्रभवति कस्माद्वर्णो विभज्यते"

इत्यादिना "सङ्करात्सर्ववर्णानाम्" इति वनपर्वोक्तसाङ्कर्य्यविवरणपूर्वकं भृगुप्रश्नमुपक्षिप्य—

"न विशेषोऽस्ति वर्णानां सर्वं ब्रह्ममयं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णताङ्गतम्॥
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रताङ्गताः॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यताङ्गताः॥
हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रताङ्गताः॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरङ्गताः"

---

इदमुपलक्षणं वृद्धगौतमीयधर्मशास्त्रेऽपि (अ० १९)
"अपस्नानन्तु यो विप्रः कुर्य्याद्द्वादशवार्षिकम्।
स तेनैव शरीरेण शूद्रत्वं याति पाण्डव!॥
शूद्रग्रामे तथाप्येको वसेद्द्वादशवार्षिकम्।
गृहोक्तमपि कुर्वीत शूद्रत्वं याति वै द्विजः॥
यस्तु राजाश्रयेणैव जीवेद् द्वादश वार्षिकम्।
स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगो यदि"
इत्यादिकमन्यदपि वचनजातं द्रष्टव्यम्।

इत्युक्तम्। तदनन्तराध्याये च—

"शौचाचारस्थितः सम्यक् विघसाशी गुरुप्रियः।

नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते"

इत्यारभ्य—

"शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते।

न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः"

इत्युक्तम्। तथा भविष्यत्पुराणे षष्ठीकल्पे—

"ब्राह्मणानधिकृत्येह ब्राह्मण्यं ब्रूहि किं भवेत्"

इत्यादिना ब्रह्माणं प्रति ऋषीणां प्रश्नमुपक्षिप्य महासंरम्भेण ब्राह्मण्यादिकं न जीवविशेषनियतं नापि देहविशेषनियतं नापि विशिष्टनियतं सर्वथा व्यभिचारादित्युक्त्वा—

"एवं शास्त्रोदितन्याय-मार्गभ्रष्टास्तु ये नराः।

वेदानध्यापयन्तोऽपि तेऽधीयानाः श्रुतिक्रमान्॥

ब्राह्मणत्वाद्विहीयन्ते दुराचारविधायिनः"

इत्यध्ययनादिमात्रस्याऽप्रयोजकत्वमुक्त्वा—

"हरिणीगर्भसम्भूतो ऋष्यशृङ्गो महामुनिः॥

श्वपाकीगर्भसम्भूतो पिता व्यासस्य सत्तमः।

गणिकागर्भसम्भूतो वसिष्ठश्च महामुनिः॥

क्षत्रियागर्भसम्भूतो विश्वामित्रो महामुनिः।

शुकीगर्भसमुद्भूतो शुको नाम महामुनिः॥

तपसा ब्राह्मणो जातः संस्कारस्तत्र कारणम्"

इति ब्राह्मण्यादिषूत्पत्तिमात्रं संस्कारपूर्तिर्वा न नियामकमित्युक्त्वा ब्रह्मणो मुखबाहूरूपादप्रभवानामेकपितृत्पन्नानां चतुर्णां पुत्राणामिव चतुर्णां वर्णानां कथं न्यूनाधिकभाव इत्यादियुक्तीर्महासंरम्भेणोपपाद्य तथाशिखायज्ञोपवीतादीनामपि सोपपत्तिकमनियामकत्वमुक्त्वा—

"तस्मान्न वा विभेदोऽस्ति न बहिर्नान्तरात्मनि।

न सुखादौ नचैश्वर्य्ये भार्याज्ञानभयेऽपि ॥
न वीर्य्ये नाकुलौ नाङ्गे न व्यापारे न चायुषि।
नातिपुष्टौ न दौर्बल्ये न स्थैर्य्ये नातिचापले"

इत्यारभ्य—

"शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः।
नेक्ष्यते सर्वधर्मेषु"

इति सर्वधर्माणां बहुग्रन्थेनाऽनियामकत्वं प्रतिपाद्य—

"क्षमा दमो दया दानं सत्यं शौचं धृतिर्घृणा।
ध्यानमास्तिक्यमद्वेषो वैराग्यमसपत्नता"

इत्यारभ्य—

"य एवम्भूतमाचारमनुतिष्ठन्ति मानवाः।
ब्राह्मण्यं पुष्कलं तेषाम्" ॥

(ड)इत्यादिना सिद्धान्तितम्। विस्तरादिदृक्षा चेत्तत्रैव द्रष्टव्यम्
अतोऽनुक्तेरित्ययुक्तम्।

---

(ड) इत्यादिना सिद्धान्तितमिति। इदमुपलक्षणम्।

वह्निपुराणेऽपि—

"न जातिर्न कुलं राजन्! न स्वाध्यायः श्रुतं न च।
कारणानि द्विजत्वस्य वृत्तमेव हि कारणम् ॥
किं कुलं वृत्तहीनस्य करिष्यति दुरात्मनः।
कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥
नैकमेकान्ततो ग्राह्यं पठनं हि विशाम्पते!।
वृत्तमन्विष्यतां तात! रक्षोभिः किं न पठ्यते ॥
बहुना किमधीतेन नटस्येव दुरात्मनः।
तेनाऽधीतं श्रुतं वाऽपि यः क्रियामनुतिष्ठति ॥
कपालस्थं यथा तोयं श्वदृतौ च यथा पयः।
दूष्यं स्यात्स्थानदोषेण वृत्तहीनं तथा श्रुतम् ॥
चतुर्वेदोऽपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः।
तस्माद्विद्धि महाराज! वृत्तं ब्राह्मणलक्षणम्" इति

(ढ) अत एव न द्वितीयः वस्तुविरोधानिरूपणात् ब्राह्मणत्वादेर्जातेरुपाधेर्वा यावत्पिण्डभाविन्या घटत्वाकाशत्वादिवन्नापगम इति हि वस्तुविरोधो वाच्यः। स तु ब्राह्मण्यादेर्वृत्तिविशेषात्मकत्वोपपादनादेव निरस्तः।

नन्वेवं वृत्तविशेषस्य ब्राह्मण्याद्यपगमापादकत्वेऽपि कथं भगवद्भक्त्यभक्त्योस्तदापादकत्वम्? उच्यते सत्यादिकं वृत्तं भगवदाज्ञोल्लङ्घनानुलङ्घनादिना तत्प्रीत्यप्रीतिजनकं हि कर्म, अतस्तेन प्रीतोऽप्रीतश्च भगवाननुष्ठात्रे स्वविषयकप्रीतिरूपज्ञानतदावरणे करोति "ददामि बुद्धियोगन्तम्" "क्षिपाम्यजस्रमशुभान्" इतिप्रतिज्ञानात्। भक्तिश्चप्रीतिरूपं ज्ञानमेव अतः पूर्ववचनानां कर्मजन्यभगवत्प्रीत्यप्रीतिपर्य्यन्तं तात्पर्यमिति भक्त्यभक्त्योस्तदापादकत्वं युक्तमेव। अतएव कुत्रचिद्भगवद्भक्तेरेव पावनत्वमुच्यते तथाहि भागवते प्रथमस्कन्धे अष्टादशाऽध्याये "अहो वयं जन्मभृतोऽद्य" इत्यादि पूर्वमेव लिखितम्। तथा द्वितीयस्कन्धे चतुर्थाध्याये—

"किरातहूणान्ध्रपुलिन्दपुल्कशा
आभीरकङ्का यवनाः खषादयः

न केवलं पुराणेतिहासयोरेव अपितु धर्मशास्त्रेऽपि वृत्तविशेषरूपमेव ब्राह्मणत्वादिकं निरूपितं तथोक्तं वृद्धगौतमीये, (अध्याय २१) युधिष्ठिरं प्रति भगवता—

"क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम्।
तमेव ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः॥
अग्निहोत्रव्रतपरान् स्वाध्यायनिरताञ् शुचीन्।
उपवासरतान्दान्तांस्तान्देवा ब्राह्मणान् विदुः॥
न जातिः पूज्यते राजन्! गुणाः कल्याणकारकाः।
चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः" इति

(ढ) द्वितीयपक्षमपि प्रतिक्षिपति—अत एव न द्वितीय इति। वस्तुविरोधादुक्तमप्यन्यार्थकमिति नेत्यर्थः। वस्तुविरोध एव नास्तीत्याह—वस्तुविरोधानिरूपणादिति।

"येऽन्ये च पापा यदपाश्रयाश्रयाः
शुध्यन्ति तस्मै प्रभविष्णवे नम
इति तृतीयस्कन्धे षोडशाध्याये—
यस्यामृतामलयशः श्रवणावगाहः
सद्यः पुनाति जगदाश्वपचात्"
इति। त्रयस्त्रिंशाध्याये—
"यन्नामधेयश्रवणानुकीर्त्तना-
द्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित
श्वादोपि सद्यः सवनाय कल्पते
कुतः पुनस्ते भगवन्नुदर्शनात
अहो बत श्वपचोऽतो गरीयान्
यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम्
तेपुस्तपस्ते जुहुवुः सस्नुरार्य्याः
ब्रह्मानूचुर्नाम गृणन्ति ये ते"
इति। षष्ठस्कन्धे त्रयोदशाध्याये—
"श्वादः पुल्कशको वापि शुद्ध्येरन् यस्य कीर्तनात्"
इति। सप्तमस्कन्धे--
विप्राद्द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम्॥
मन्ये तदर्पितमनोवचनेहितार्थ-
प्राणः पुनाति भुवनं न तु भूरिगानः" इति।

एवमन्यत्रापि द्रष्टव्यम् एतेन तथाऽव्यवहारादर्शनादिति निरस्तम्। प्रामाणिकतममहर्षिव्यवहारस्य दर्शितत्वात लोके

---

ब्राह्मण्यादेर्वृत्तिविशेषात्मकत्वादेव मनुरपि(३ अध्याये)वृत्तविशेषापगमाद् ब्राह्मण्यापगमं वदति "शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्। जनयित्वा सुतंतस्यां ब्राह्मण्यादेव हीयते" इति।

तथा व्यवहाराभावस्तु तदज्ञानादभिमानादिना वेति न दोषाय। अतो "न शूद्रा" इत्यादिवचनानां प्रामाणिकवर्णनिश्चायकत्वात् वर्णसाङ्कर्याविहत्वं दूरादपहस्तितम् ।

एतेन विष्णुपुराणवचनविरोधोक्तिरपि निरस्ता ऐकार्थ्यात् अत्यन्तसङ्करः स्वधर्मत्यागेन निहीनवर्णत्वप्राप्तिरिति हि तदर्थः अत एवाग्रिमवचने "ब्राह्मणाद्यास्तु ये वर्णाः स्वधर्मादन्यतो मुखाः । यान्ति ते नरकनरकम्" इत्युच्यते यद्युत्पत्तित एव श्रेष्ठयं विप्रस्य तर्हि स्वधर्मत्यागिनोऽपि तस्य पूज्यतैव स्यात न त्याज्यता अतस्त्वद्वचनमेव तद्गलं पीडयति इत्यलमनेन मक्षिकोपरि मन्दरप्रक्षेपेण

यदपि श्वपचोऽपीति श्लोके पूर्वोत्तरार्द्धान्यतरवैयर्थ्यमिति तदपि हास्यम् तथा सति—

"आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत्"

इति मनुस्मृतिप्रथमाध्यायीय ( १०९ ) श्लोकेपि पूर्वोत्तरार्द्धयोरन्यत्तरेणान्यतरार्द्धस्यार्थापत्त्यैव लाभेनान्यतरवैयर्थ्यापत्तेः । यदि तत्रस्पाष्टयार्थं व्यतिरेकेणोपपादनाय वा तथोक्तिस्तर्हि प्रकृतेऽपि तुल्यम् । अतो "विप्राद्द्विषड्गुणयुतादि" त्याद्युक्तार्षवचनसम्वादिनः श्वपचोऽपी-त्याद्यार्षवचनस्य कल्पितत्वोक्तिस्तव मूर्खतामेव प्रकटयति—

यत्तु "ये कण्ठलग्नतुलसीनलिनाक्षमाला" इति भगवच्चिन्हधारणवचनस्य "वर्ज्जयेल्लिङ्गिनः सर्वान् श्राद्धकाले तु धर्मवित" "नैतद्विशीलेन न दाम्भिकेन न लिङ्गिना स्थापनमत्र कार्य्यम्" इति लिङ्गधारिणां त्याज्यत्वपरमात्स्यवचनाभ्यां विरोध इति। तन्न, तत्र लिङ्गिशब्देन कण्ठे निबद्धशिवलिङ्गानामाराध्यादीनां ग्रहणात । अस्तु वा चिन्हधारमात्रपरम् तत्तु सामान्यवचनम् श्रुतिस्मृतिविहितभगवच्चिह्नधारिव्यतिरिक्तविषयमेव सामान्य निषेधस्य विहित व्यतिरिक्तविषयत्वात् । अन्यथा लिङ्गशब्देन सर्वचिह्नग्रहणे शिखायज्ञोपवीतादिचिह्नधारिणां भस्मत्रिपुण्ड्रादिचिह्नधारिणाञ्च वर्ज्जनीयत्वप्रसङ्गात ।

किञ्च विष्णुपुराणे तृतीयांशे एकादशाध्याये—

"पञ्चरात्रविधानज्ञा ये च विष्णुपरायणाः।
विष्णुरूपधरा ह्येते विष्णुमेव समाश्रिता॥
एते सर्वे ह्यतिथयः पूज्या वै सार्वकालिके।

इति। पञ्चरात्रोक्तविष्णुचिन्हधारिणामतीव पूज्यत्वोक्तेस्तद्विरोधादुक्तमात्स्यवचने देवतान्तरलिङ्गिपर एव।

यदपि "न चलतिनिजवर्णधर्मतो य" इत्यादिविष्णुपुराणवचनोक्तं तु वास्तवंवैष्णवलक्षणमित्युक्तम्। तन्न नैतावन्मात्रं लक्षणम् अपितु तत्प्रकरणोक्तं सर्वमपि, प्रकरणे च "चक्रप्रतिहतवीर्य्यबलस्य" इति चक्रधारणमपि बाह्यचिन्हं विधीयत इति पूर्वमेवोक्तम्। अतो-वैष्णवाचारः सर्वोऽपि शास्त्रीय एवेति तस्याशास्त्रीयत्वोक्तिर्दूरानिरस्ता। यत्त्वेतेषाम्परमोपास्यस्यद्वयमन्त्रस्य काप्यार्षं मूलं नास्त्येवेति निश्चय इति तदपि हास्यम्। न हि घूकेन स्वाज्ञानान्नास्तीति निश्चितः पदार्थो मनुष्यैरपि नाऽभ्यस्यते अतः कठशाखाध्यायिनां पाञ्चरात्रादितदुपबृंहणवेदिनाञ्च तन्मन्त्रानुपूर्वी स्पष्टैवेति नेह तन्यते—

यदपि विशिष्टाद्वैतशब्दार्थं विग्रहप्रदर्शनपूर्वकमुक्त्वा एतच्चाद्वैतवादिभिर्बहुशो निराकृतमित्यस्माभिरुपरम्यत इति। तन्न, तत्राद्वैत्युक्तदूषणानि तूलवन्निराकृत्य विशिष्टाद्वैतिभिः स्वसिद्धान्तस्य समर्थितत्वात अद्वैतस्य सहस्रधा खण्डितत्वाच्च। यदि त्वया तानि दर्शयिष्यन्ते तर्हि वयमपीमानि दर्शयिष्यामः।

यत्तु विशिष्टाद्वैतशब्दस्यानार्षत्वेन शूद्रस्य श्रवणाध्ययनार्थप्रतिषेधादिति ब्रह्मविचाराधिकारनिषेधेन "न शूद्राय मतिन्दद्यान्न-चास्योपदिशेद्धर्मंन्नचास्यव्रतमादिशेत"इति मनुना शूद्रं प्रत्युपदेशमात्रनिषेधात तस्मादुपदेशाग्रहणस्य कैमुत्यसिद्धत्वेन "वेदाक्षरविचारेण शूद्रश्चण्डालतां व्रजेत्"इति पराशरस्मृतौ वेदसम्पर्कमात्रनिषेधात् तद्रहस्यविचारनिषेधस्य शूद्रे कैमुत्यसिद्धत्वेन च तेन प्रथमप्रवर्त्तितस्य वेदान्तविषयस्याऽस्य सिद्धान्तस्य युक्तायुक्तत्वविचारो बन्ध्यासुतसौंदर्य्यासौंदर्य्यसम्भावनादिवदसम्भावित एव अथवा

शूद्रेण क्रियमाणे वेदपाठे ज्योतिष्टोमादौ वा शुद्ध्यशुद्धिसम्पत्त्यसम्पत्तिविचारवदनावश्यक एवेति प्रलपितम् ।

तत्र विशिष्टाद्वैतशब्दस्यानार्षत्वं ऋष्यनभिमतत्वम् अथ तदप्रयुक्तत्वं ? नाद्यः अनभिमतत्वप्रयोजकीभूतासाधुत्वाबोधकत्वाभावात् न च चिदचिच्छरीरकत्वाविशिष्टब्रह्माभेदबोधकत्वाविशिष्टः स शब्दोऽनभिमतः उक्ताभेदस्य तुच्छत्वादिति वाच्यम् । बादरायणबोधायनादिमहर्षिसिद्धान्तसिद्धस्य तस्य तुच्छत्ववादेन त्वज्ज्ञानस्यैव तुच्छत्वसिद्धेः । नचाप्रयोगादनभिमतत्वानुमानं शक्यम् उक्तरीत्या विद्यमानार्थकस्य सम्भवत्तद्बोधकभावस्य शब्दस्य महर्ष्यनभिमतत्वबाधात् अप्रयोगस्य विवक्षाधीनत्वेनाप्रयोजकत्वाच्च । द्वितीयेऽपि किन्तदप्रयुक्तस्याबोधकत्वं विवक्षितमुत महर्ष्यप्रयुक्तशब्दस्य वेदान्तशास्त्रे व्यवहारोऽन्यत्रादृष्ट इति । नाद्यः त्वयैव विग्रहादिप्रदर्शनेन बोधकत्वाद्युपपादनात् न द्वितीयः ऋष्यप्रयुक्तानामप्यनिर्वचनीयख्यातिभावरूपाज्ञानादिशब्दानां व्यहारदर्शनात् तत्र तदर्थबोधकाविद्यादिशब्दान्तरप्रयोगेण निर्वाहे प्रकृतेपि तुल्यम् अद्वैतशब्दस्यायोग्यशुद्धाद्वैतबोधनासमर्थस्य विशिष्टाद्वैतबोधकत्वात् ऋष्यप्रयुक्तशब्दस्य सिद्धान्तनामत्वायोग इति चेन्नैवं राजाज्ञास्ति । दृश्येते च भास्करयादवसिद्धान्तयोरनार्षे औपाधिकभेदाभेदस्वाभाविकभेदाभेदनामनी यदि तयोरद्वैतमित्येव नामेत्याग्रहः ॥ तर्हि प्रकृतेप्यद्वैतमित्येव नामास्तु विशिष्टशब्दघटितप्रयोगस्तु तत्र स्वाभाविकादिशब्दवन्मतान्तरभ्रमव्यावृत्त्यर्थ इति न कश्चिद्दोषः । प्रयुक्तश्च ऋषिभिः बृहद्ब्रह्मसंहितायां चतुर्थपादे दशमाध्याये रुद्रगीतायां विशिष्टाद्वैतशब्दः "एवं विशिष्टाद्वैतं हि श्रुतिस्मृत्युदितं नृप ! " इति एवमन्यत्रापि द्रष्टव्यम् । अतोनाऽनर्थत्वशङ्कापि " श्रवणाध्ययनार्थप्रतिषेधात " इति सूत्रश्च शूद्रस्य वेदेन ब्रह्मविचाराधिकारानिषेधपरं न पुराणेतिहासाभ्यामपि । अत एव विष्णुपुराणे तृतीयेंशे चतुर्थाध्याये व्यासं प्रकृत्य "सूतं जग्राह शिष्यं स इतिहासपुराणयोः"इत्युक्तम् । तत्रैव च षष्ठेध्याये—

"प्रख्यातो व्यासशिष्योऽभूत्सूतो वै रोमहर्षणः ।
पुराणसंहितां तस्मै ददौ व्यासो महामुनिः"

इत्युक्तम् । "न शूद्रायमतिम्"इत्यादिमनुवचनमपि अत एव न शूद्रायोपदेश-

मात्रनिषेधपरम् तथात्वे "श्रावयेच्चतुरोवर्णान् कृत्वा ब्राह्मणमग्रतः" इति विधिविरोधाच्च । अत एव तत्र मुक्तावली—" शूद्राय मतिं दद्या-र्योपदेशं न दद्यात धर्मोपदेशस्य पृथङ्निर्देशात" इत्यारभ्य "धर्मो-पदेशो न शूद्रस्य कर्त्तव्यः ॥ व्रतञ्चास्य प्रायश्चित्तरूपं साक्षान्नोपदिशेत किन्तु ब्राह्मणं मध्ये कृत्वा तदुपदेशव्यवधानात । तथाह्याङ्गिरा:—

"तथा शूद्रं समासाद्य सदाधर्मपुरस्सरम् ।
अन्तरा ब्राह्मणं कृत्वा प्रायश्चित्तं समादिशेत्" ॥

प्रायश्चित्तमिति सकलधर्मोपदेशस्योपलक्षणार्थम् इति दृश्यते ।

एतेन शूद्रायोपदेशमात्रनिषेधात्तस्मादुपदेशाऽग्रहणं कैमुत्यसिद्धमि-ति च दूरतोऽपास्तं यत उपदेशमात्रनिषेधे सिद्धेऽपि पूर्वजन्मनि कृत-ब्रह्मविचारात् (ण) जातिस्मराच्छूद्रादप्युपदेशग्रहणं युज्यते इति पूर्वमेव मनुवचनाद्युपन्यासेन निरूपितम् ।

एतेन शूद्रस्य वेदाक्षरविचारनिषेधकं पराशरवचनमपि न प्रकृत-बाधकम् । तदभावेपि शूद्रस्य पुराणजातिस्मरत्वदेवतानुग्रहविशेषब्रह्म-ज्ञानस्य स्वशिष्यान्प्रति तदुपदेशस्य च सम्भवात । किञ्च सकलसङ्को-चनिवृत्तिपूर्वकनिरवधिकविकासापन्नज्ञानवतो मुक्तस्यैव शठकोपमुनेरु-पदेष्टृत्वाङ्गीकारात सर्वमिदं गगनलेपायते ।(प)अतस्सकलश्रुतिस्मृतीति-

(ण) जातिस्मरादिति । त्रय्यारुणिकौशिकाद्युपदेशकसूत-धर्मव्याधादेरिवेति शेषः ।

(प) वक्तव्यमुपसंहरति—अत इति । "भवव्रतधरा ये च ये च तान् समनुव्रताः । पाखण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिनः" "तदद्यं हरे रूपं जगृहुर्ज्ञानदुर्बलाः । यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया तानि पापस्य खण्डानि लिङ्गं खण्डमिहोच्यते ॥ एवमिन्द्रे हरत्यश्वं वैन्ययज्ञजिघांसया । तद्गृहीतविसृष्टेषु पाखण्डेषु मतिर्नृणाम् ॥ धर्म इत्युपधर्मेषु नग्नरक्तपटादिषु" "एते पाखण्डिनः पापा न ह्येताना-लपेद्बुधः । पुण्यं नश्यति सम्भाषादेतषां तद्दिनोद्भवम्" ॥ "पुंसां जटाभरणमौण्ड्यवतां वृथैव मोघाशिनामखिलशौचनिराकृतानाम् । तोयप्रदानपितृपिण्डबहिष्कृतानां सम्भाषणादपि नरा नरकं प्रयान्ति"

हासपुराणपञ्चरात्रप्रतिपाद्यमाने भगवद्बादरायणबोधायनादिमहर्षिसन्ततिपरिगृहीतेऽस्मिन्सिद्धान्ते दोषारोपणे प्रवृत्तस्याऽत एव वेदवैदिकमहर्षिगोष्ठीप्रवेशानर्हस्य महापातकिनस्तव वचनानां बौद्धवचनानामिव श्रुतिस्मृतिपरिशीलनरहितविप्रलम्भकानामत एव परमर्षिकरुणावलोकनपात्रभावमिच्छाद्भिरस्मादृशैरवश्यखण्डनीयानां खण्डनार्थावलोकनप्रयुक्तदुरितनिबर्हणाय तमेव परमकारुणिकमशरणशरण्यं भगवन्तं शरणमुपगच्छामः।

अवाच्यत्वद्वचोनूक्तिदुरितादनिवारितात्।
त्रायतान्त्रियुगो देवः करुणावरुणालयः॥

इति श्रीसर्वतन्त्रस्वतन्त्रस्य श्रीवृन्दावननिवासरतेः श्रीमद्गोवर्द्धनरङ्गदेशिकस्य कृतौ दुर्जनमुखभङ्गचपेटिका समाप्ता।

इति भागवतविष्णुपुराणाद्युक्तप्रकारेण शिवव्रतधराणां शक्रगृहीतविसृष्टपाखण्डरूपधारिणामत एव ज्ञानदुर्बलानां नग्नानांचतुःकपर्दिकाक्रीतगैरिकादिना रक्तपटधारिणां अथैव जटाभरणमौण्ड्यवतां पाखण्डिनां सम्भाषणादपि नरकगमनमवबुध्य तद्रचितग्रन्थाक्षरपठनेऽपि तादृशं दोषं मन्वानः पराशरपाराशर्यादिमुनिजनमनस्सन्तापमपनिनीषुस्तत्करुणावलोकनपात्रीभवंस्तद्वचसां कल्पितत्वादिकं कथयितुः कस्यचित्पाखण्डिनो वाग्जालस्य खण्डनार्थानुवादेनापि दुरितागमनसन्दिहानो दुरितापहतये भगवन्तं शरणमुपगच्छन् ग्रन्थसमाप्तावाशीरूपं मङ्गलमाचरति-अवाच्येति। अत्र च कोऽसौ भगवच्छब्दवाच्यो यं शरणमुपगच्छतीतीमां शङ्कां श्रीभागवतशास्त्रमेवाऽपनुदति। तथाहि प्रथमेऽष्टादशाध्याये "अथापियत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः। शेषं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः" इति

श्रीमद्वैष्णवसिद्धान्तं-महामेरुमिव स्थितम्।
कथं नास्तिकभूदारः समुत्खातयितुं क्षमः॥

इति श्रीभागवताचार्यविहिता
टिप्पणी समाप्ता।

# विषयसूचना ।



# शुद्धिपत्रम् ।

| पृ० | पं० | अशु० | शुद्धम् |
|---|---|---|---|
| २ | ७ | दशिकः | देशिकः |
| २ | १८ | आश्रयं | आश्रयो |
| ४ | १ | सर्कष | सङ्कर्ष |
| ४ | ६ | सिद्धाता | सिद्धान्ता |
| ४ | ६ | वैद्का | वैदिका |
| ४ | १० | वृरा | वृन्दा |
| ४ | २१ | सन्या | संन्या |
| ७ | ३ | अशु० इति(घ)तत्र | शु०इति तत्र प्रविष्टा वर्णाश्रमाधिकारच्युता भवन्तीति (घ) तत्र |
| ८ | १५ | मत्वर्ण | मवर्ण |
| ८ | १९ | त्वापते | त्वापत्ते |
| ८ | २१ | पक्ता | पयुक्ता |
| ८ | २५ | तिपदा | तिपाद |
| ९ | १८ | त्यदीनि | त्यादीनि |
| ११ | १० | पपृच्छु | पप्रच्छु |
| ११ | २३ | स्यक | स्यैक |
| १५ | १७ | म्नोदः | म्नादेः |
| १७ | २१ | विपेन्द्र! | विप्रेन्द्र! |
| २३ | ७ | निष्फल | निष्फल |
| २३ | ९ | पूव | पूर्व |
| २३ | १४ | च्छ्रति | च्छ्रुति |
| २४ | ४ | वेदन | वेदान |
| २४ | ७ | दशाय | दशायां |
| २४ | १५ | वै॰ व | वैष्णवां |
| २७ | १८ | स्थपन | स्थापन |
| २९ | २६ | दृश्य | दृश्य |
| ३१ | १ | स्तरणो | स्तेरणो |
| ३१ | १६ | स्वभावि | भवि |
| ३४ | २४ | परपरा | परम्परा |
| ३५ | १४ | नतरं | नन्तरं |
| ३५ | २५ | युमा | युर्मा |
| ३६ | ५ | षष्टिर्हि | षष्टिर्हि |
| ३६ | १४ | निर्भिधा | निर्भिवां |
| ३६ | २४ | सहु | सुहु |

| पृ | पं | अशु० | शु० |
|---|---|---|---|
| ३७ | २० | त्वन्तं | त्वतं |
| ३७ | २० | मारथा | माद्दथा |
| ३८ | ७ | त्यधीत्य | त्याधीत्य |
| ३८ | ६ | प्रभृत्ति | प्रभृति |
| ३८ | १० | शीलत | शीलित |
| ३८ | १५ | तद्यव | तद्व्यव |
| ३८ | २१ | मज्ञना | मज्ञाना |
| ३८ | २२ | स | सा |
| ३८ | २६ | दूषिय | दूषय |
| ३६ | २४ | परमै | पारमै |
| ४० | १ | क्तिनिन्दा | क्तिर्निन्दा |
| ४० | ८ | कुतर्गु | कुतेर्गु |
| ४० | २३ | शुश्रुमः | शुश्रुम |
| ४२ | २५ | पाषाडि | पाषण्डि |
| ४६ | २५ | दौर्वाशस | दौर्वासस |
| ४७ | २९ | सपरी | सुपरी |
| ४८ | १ | शास्त्र | शास्त्रं |
| ५० | २६ | क्षुमिवै | क्षुभिर्वै |
| ५२ | १० | तेतं | तेतद् |
| ५२ | १९ | रौद्रैस्तु | रौद्रैस्तु |
| ५३ | ५ | सङ्गास्य | सङ्गस्य |
| ५३ | १७ | मैत्रपा | मैत्रेषा |
| ५८ | २३ | द्रूरु | द्रुरु |
| ६० | ७ | नानुल | नानुल्ल |
| ६१ | २४ | ब्रह्मण्या | ब्राह्मण्या |
| ६२ | १५ | न्यस्तरे | न्यस्तरे |
| ६२ | १८ | त्यापार्थ | त्याद्यार्थ |
| ६३ | १ | शाप्याये | शाध्याये |
| ६३ | ३ | श्रिता | श्रिताः |
| ६४ | ८ | शक्यं | शङ्क्यं |
| ६४ | १६ | ग्रहः ॥ | ग्रहः, |
| ६४ | २० | वृत्यर्थ | वृत्त्यर्थ |

## निवेदन।

(भा०ए०अ०५) "देवर्षिभूताप्तनृणां" के अनुसार जो लोग समस्त कृत्य को परमात्मा के चरणों में विन्यस्त कर सर्वात्मभावसे परमात्मा के शरणागत हुए हैं उन भागवतों को कितने एक लोग ऐसा कहते हैं कि-इन वैष्णवों का कोई आश्रम नहीं तिससे येपतित हैं। दक्ष स्मृतिअ०१में कहा भी है कि—"अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः। आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते हिसः॥ जपे होमे तथा दाने स्वाध्याये च रतस्तु यः। नासौ तत्फलमाप्नोति कुर्वाणोऽप्याश्रमाच्च्युतः" इस वास्ते श्रीअयोध्या कनकमण्डप उत्तरद्वार निवासी श्रीबलरामस्वामी ने यह हंसाश्रम निर्णय नामक लघु संग्रह किया है। विवेकी मध्यस्थों को यह संतोष प्रद है! वैष्णवों का परिहास तथा तिरस्कार करना येतोखलों के स्वभाव हैं एकादश अ०५में कहा भी है "पापा विहसन्त्यच्युतप्रियान्" सतोऽवमन्यन्ति हरिप्रियान् खलाः"॥ तिससे शान्ति ही शान्त का कृत्य है।

निवेदक पं० रामनारायणदास रामकोट--अयोध्या



# हंसाश्रमनिर्णय ।

श्रीवाधूल कुलतिलक श्रीगोवर्द्धन रङ्गाचार्य्यचरणचञ्चरीक
पुरा श्रीवृन्दावनस्थ-सम्प्रति श्रीमदयोध्याकनकमंडप
उत्तरद्वार निवासनिरत शाण्डिल्यवंशावतंस
श्रीबलरामस्वामिसंगृहीत ।

जिसको
श्रीमदयोध्या बृहत्स्थानाधिपति
महन्त
श्रीराममनोहरप्रसादजीमहाराजने
उक्तस्वामिचरणाश्रितभागवताचार्य्य
द्वारा
श्रीवृन्दावन मदनगोपाल मुद्रालयमें
श्रीविश्वम्भरनाथ शर्म्म की अध्यक्षता में
मुद्रित कराकर प्रकाशित किया ।

श्रीरामानुज वत्सर ९९०
विक्रमसंवत १९६८ श्रावणशुक्ल १२

प्रथम वार १५००

श्रीमते रामानुजाय नमः।

# हंसाश्रमनिर्णय।

प्रपन्नपारिजाताय तोत्रवेत्रैकपाणये।
ज्ञानमुद्राय कृष्णाय गीतामृतदुहे नमः।

जैसे प्रायशः सकल शास्त्रप्रतिपाद्य सर्वजनप्रसिद्ध चार ही वेद हैं, तौ भी "इतिहासपुराणं पञ्चमं वेदानां वेदम्" इस छान्दोग्य उपनिषद् प्रमाण से इतिहास पुराण भी पञ्चम वेद प्रसिद्ध है; ओर जैसे परमपद प्राप्ति में गीतादिप्रतिपाद्य कर्मादि उपाय चतुष्टय हैं तौ भी—

"पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः।
तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम्"॥

इत्यादि प्रमाणों से वैष्णवाभिमान पञ्चमोपायहै। उसी प्रकार ब्रह्मचर्यादि आश्रम चतुष्टय प्रायशः शास्त्र और लोक में प्रसिद्ध है तौ भी "अन्यत्राच्युतगोत्रतः, अत्याश्रमिभ्यः, हंसाश्रमः सतामुक्तः, पञ्चमो वैष्णवो मतः" इत्यादि श्रुतिस्मृत्यादि प्रमाण से कुलानुरूप परमहंसवैष्णवाश्रम भी पञ्चमाश्रम है। यदि कहो कि वह कुल कौन है कि जिसके अनुरूप यह परमहंस वैष्णवाश्रम पञ्चमाश्रम है? सो कुल कहते हैं (भा० च० २१।१२)

"सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृक्।
अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः"॥

श्रीधरस्वामी "अच्युतो गोत्रप्रवर्त्तकतुल्यो येषां वैष्णवानां तद्व्यतिरेकेण च" श्रीवीरराघवः "अच्युतगोत्रादन्यत्र जात्यन्तरेष्वपि भागवतकुलादन्यत्रेत्यर्थः" इत्यादि प्रमाण से जैसे ब्राह्मणादिकुल ब्रह्मा से प्रवृत्त भया है उसी प्रकार भागवतकुल भगवान् से प्रवृत्त भया है (भा० तृ० १२।४१) "आश्रमांश्च

यथासङ्ख्यमसृजत्सह वृत्तिभिः" इत्यादि प्रमाणसे जैसे ब्रह्मचर्यादि आश्रम ब्रह्मा के पूर्वादि मुखोंसे उत्पन्न भये हैं उसी प्रकार यह भागवत परमहंसाश्रम में तथा उस के विष्णुशिर से उत्पन्न होने में प्रमाण लिखते हैं (श्वेता० अ० ६। २१)

"तपः प्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान्।
अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम्" ॥

श्रीरङ्गरामानुजमुनिकृतोपनिषत्प्रकाशिका "अत्याश्रमिभ्यः अतिः पूजायां पूज्याश्रमयुक्तेभ्यः परमहंसवैष्णवेभ्यः।

"हंसाश्रमः सतामुक्तो विष्णुशिरससमुद्भवः॥
पूजनीयश्च सर्वेषां पञ्चमाश्रम उच्यते"॥
इति स्मृतेः"

"ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
चत्वार आश्रमा एते पञ्चमो वैष्णवो मतः"॥

स्कन्दपुराणे—

"सत्यमेतन्मुनिश्रेष्ठ ! ये चत्वारस्त्वयोदिताः।
आश्रमास्तेभ्य एवायं पञ्चमो हि ममाश्रमः"॥

संग्रहे पञ्चरात्रवचनम्।

"ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथा यतिः।
चत्वारो विहिताः शास्त्रे पञ्चमो मद्व्यपाश्रयः॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथैव च।
परिव्राट् च चतुर्थोऽत्र पञ्चमो नोपपद्यते॥
चत्वारः प्राकृता ह्येते तादृशोऽन्यो न विद्यते।
वैष्णवस्तद्गुणातीतो ह्यतः प्रोक्तोऽस्ति पञ्चमः॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा।
चत्वार आश्रमा ह्येते पञ्चमो मद्व्यपाश्रयः"॥

(भा० प्र० ३। १३) "दर्शयन् धर्मं धीराणां सर्वाश्रमनमस्कृतम" सुदर्शनसूरिकृतशुकपक्षी टीका 'सर्वाश्रमनमस्कृतम् अन्त्याश्रमपारमहंस्यवर्त्म' (भा० प्र० १८। २२)

"अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः।
सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः॥

यत्रानुरक्ता सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम्।
व्रजन्ति यत्पारमहंस्यमन्त्यं यस्मिन्नहिंसोपरमः स्वधर्म्मः"
शुकपक्षी'ऊढं धृतं पारमहंस्यं परमहंसाश्रमम्'जीवगोस्वामिकृतक्रमसन्दर्भटीका "अन्त्यं भागवतपरमहंसत्वम्।
"मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने!" ॥
इत्युक्तेः" (भा० पं० ६। २०) "नवा एतद्विष्णुदत्त! महदद्भुतं यदसम्भ्रमः स्वशिरश्छेद आपतितेऽपि विमुक्तदेहात्मभावसुदृढहृदयग्रन्थीनां सर्वसत्वसुहृदात्मनां निर्वैराणां साक्षाद्भगवताऽनिमिषारिवरायुधेनाऽप्रमत्तेन तैस्तैर्भावैः परिरक्ष्यमाणानां तत्पादमूलमकुतश्चिद्भयमुपसृतानां भागवतपरमहंसानाम्"श्रीवीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका टीका'अत्र परमहंसशब्दो विरक्तपरः आङ्गिरससुतस्य चतुर्थाश्रमप्रवेशाभावात् (भा० प्र० ४। ३१)
"किं वा भागवता धर्मा न प्रायेण निरूपिताः।
प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः"
(भा० पं० १। २६) "एतेषां कविर्महावीरः सवन इति त्रय आसन्नूर्ध्वरेतसस्त आत्मविद्यायामर्भभावादारभ्य कृतपरिचयाः पारमहंस्यमेवाश्रममभजन्"इहां प्रियव्रत के इन तीन पुत्रोंने भागवतपरमहंसाश्रमका ही स्वीकार कियाहै, क्यों कि? ब्राह्मण को छोड़कर अन्यवर्णको चतुर्थाश्रम का अधिकार नहीं है तिसमें प्रमाण (विष्णुपु० अं० ३। ९। ३२)
"कृत्वाग्निहोत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोति।
विप्रस्तु भैक्षोपगतैर्हविर्भिश्चिताग्निनां सम्व्रजति स लोकान्॥
मोक्षाश्रमं यश्चरते यथोक्तं शुचिः सुसङ्कल्पितबुद्धियुक्तः।
अनिन्धनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिः"
विष्णुचित्तीयटीका।
"गतिस्तुर्याश्रमे नास्ति बाहुजोरुजयोः क्वचित्।
तुर्याश्रमे गतिः प्रोक्ता मुखजानां स्वयम्भुवा"
इति दत्तात्रेयोक्तेः 'ब्राह्मणः प्रव्रजेद्गृहात्'इति सम्वर्त्त-यम बोधायनोक्तेश्च"श्रीधरीयटीका ब्रह्मलोकं ब्रह्मस्वरूपं लोकं व्रजतीत्युपा-

सनपरमफलोक्तेः द्विजातिरिति पूर्वश्लोकोक्तविप्रस्यैव निर्देशः। गतिस्तुर्याश्रम इत्यादिदत्तात्रेयोक्तेः"( भा० ए० १८। १४ ) "विप्रस्य वै संन्यसतो देवा दारादिरूपिणः। विघ्नं कुर्वन्ति" इति। इत्यादि प्रमाण से कवि आदि तीनों भागवतपरमहंसाश्रम मे प्रविष्ट हैं। अब पंचमाश्रममें और भी प्रमाण लिखते हैं ( भा० द० १३। २ ) 'सतामयं सारभृतां निसर्गः' 'न परिलषन्ति केचिदपवर्गमपीश्वर ! ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः' ( भा० प्र० ५। १० ) 'तद्वायसं तीर्थमुशन्ति साधवो न यत्र हंसा निरमन्त्युशिक्क्षयाः' ( भा० तृ० १५। ३७ ) 'तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सह श्रीः' ( भा० पं० ५। २७ ) "उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः" इति ( भा० ए० २९। ३ ) "अथात आनन्ददुघपदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन !" तथा—

"देवतान्तरशब्दादिभक्तिकृष्णाख्यहेतुषु।
साम्यकृत्परमैकान्ती हरौ स्वामीति बुद्धिमान्॥
एकान्ती व्यपदेष्टव्यो नैव ग्रामकुलादिभिः।
विष्णुना व्यपदेष्टव्यस्तस्य सर्वं स एव हि"॥

इत्यादि प्रमाणों से परमहंसवैष्णवों का तत्त्व हित पुरुषार्थानुकूल कायिक वाचिक मानसिक भगवत्कैंकर्यकरणरूप पूर्वोक्त लोकविलक्षणकुलानुरूप भागवतपरमहंसाश्रम, ब्राह्मणादि के ब्रह्मचर्यादि सर्व आश्रमों से नमस्कृत पञ्चमाश्रम भिन्न ही है। जैसे ब्रह्मचर्यादि आश्रमके मेखलाजिनदण्डादि,यष्टि दर्भमुष्ट्यादि,वल्कलादि,त्रिदण्डादि,व्यावर्त्तक लिङ्ग हैं। वैसे ही "यकण्ठलग्नतुलसी" इस उक्तप्रकार से हंसाख्य पञ्चमवैष्णवाश्रम के तुलसी कमलमालिका शङ्खचक्र ऊर्ध्वपुंड्रादि व्यावर्त्तक लिंग हैं। इसी कारण ( भा० द० ८७ ) "न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः" इत्यादि श्रुतिगीत के अनुगुण "सर्वप्रकारमहामोक्षप्रकारश्च न वदामः" इस उक्तप्रकार से अपवर्गपर्यंत की अभिलाषा नहीं करने वाले हंसाश्रमनिष्ठ महानुभावलोग द्राविड़देश में होवेंगे ऐसा एकादश में निमि महाराज के प्रति करभाजन नामक योगेश्वर ने कहा है ( भा० ए० ५। ३८ )

"कृतादिषु प्रजा राजन्! कलाविच्छन्ति सम्भवम् ।
कलौ खलु भविष्यन्ति नारायणपरायणाः ॥
क्वचित्क्वचिन्महाराज! द्रविडेषु च भूरिशः ।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥
कावेरी च महापुण्या प्रतीची च महानदी" ।

इत्यादि स्थलों में उत्पन्न होनेवाले जो दिव्यसूरिलोग रहे वे सर्वाश्रमनमस्कृतहंसाश्रमनिष्ठ ही रहे। इनही के माहात्म्य को सूचन करने वाला यह श्लोक है।

"मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने!" ॥

इति। अब यहां इतना और भी जानने के योग्य है कि जैसे हंस परमहंस शब्द चतुर्थाश्रमनिष्ठ के वाचक होकर भी भागवत परमहंसरूप पंचमाश्रम हंसाश्रमनिष्ठ के भी वाचक हैं। उसी प्रकार भागवत विरक्त वैष्णव साधु सत् इत्यादि शब्द भी भक्तिनिष्ठ के वाचक होकर भी प्रकरण से हंसाश्रमरूप पञ्चमाश्रमनिष्ठ के वाचक हैं, जैसे हंस पद्ममकरंद में रतिवाले होते हैं-उसी प्रकार हंसाश्रमी भी भगवत्पादारविन्द मकरंदादिशब्दवाच्यश्रीहरिगुणकर्मादिके कीर्त्तनश्रवणादि में रत रहते हैं जैसे ( भा० ष० ३ । २८ ) "तानानयध्वमसतो विमुखान्मुकुन्दपादारविन्दमकरन्दरसादजस्रम् निष्किञ्चनैः परमहंसकुलै रसज्ञैर्जुष्टात्" यहां परमहंसाश्रमियों का असाधारण लक्षण भगवत्पदारविंदमकरंदरसास्वाद कहा है। ऐसे प्रकरणमें जो विरक्त वैष्णव साधु सत् इत्यादि शब्द आवें वे भी हंसाश्रमनिष्ठ नारायणपरायण के ही वाचक हैं। यथा ( भा० ष० ३ । ३३ ) "कृष्णाङ्घ्रिपद्ममधुलिट् न पुनर्विसृष्टमायागुणेषु रमते" ( भा० द० १ । ४ ) निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात्। क उत्तमश्लोकगुणानुवादात् ( भा० द० १३ । २ ) "सतामयं सारभृतां निसर्गो यदर्थ० ( भा० प्र० ५ । ११ ) "नामान्यनन्तस्य यशोङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः" इत्यादि। जहां श्रीहरि सम्बन्धि लीलावतारगुण कर्म

यश का कीर्त्तन श्रवणादि नहीं है उसमें हंस लोग रति नहीं पावते हैं। ऐसा व्यतिरेक भी देख पडता है। यथा (भा० प्र० ५। १०)

"न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित्।
तद्वायसं तीर्थमुशन्ति साधवो न यत्र हंसा निरमन्त्युशिक्क्षयाः"

(भा० द्वा० १२। ५०) "तद्ध्वाङ्क्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः" (भा० माहा० अ० ६। ७)

"देशे देशे विरक्ता ये वैष्णवाः कीर्त्तनोत्सुकाः।
"तेषु विप्रा विरक्ताश्च स्थापनीयाः प्रबोध्य च॥
"विरक्तो वैष्णवो विप्रो वेदशास्त्रविशुद्धिकृत्।
दृष्टान्तकुशलो धीरो वक्ता कार्योऽतिनिस्पृहः॥
"वैष्णवाश्च विरक्ताश्च न्यासिनो ब्रह्मचारिणः।
मुख्यभागो स्थितास्ते च तदग्रे नारदः स्थितः॥
"यश्चैनां कथयति शुद्धवैष्णवाग्रे।

(भा० द० १। १४) प्रत्यचर्य कृष्णचरितं कलिकल्मषघ्नं व्याहर्त्तुमारभत भागवतप्रधानः" इत्यादि स्थलों में जो भागवत विरक्त वैष्णव साधु सत् आदि शब्द आवतें हैं। वे प्रकरण-बल से नारायणपरायण पंचमाश्रम रूपहंसाश्रम निष्ठ ही के बाचक हैं। यद्यपि।

"वेदे रामायणे चैव पुराणे भारते तथा।
आदौ मध्ये तथैवान्ते हरिः सर्वत्र गीयते"

इत्यादि प्रमाण से भारतादि सर्वग्रन्थों में श्रीहरिकीर्त्तन ही है तथापि (भा० द्वा० १२। ६५)

"कलिमलसंहतिकालनोऽखिलेशो।
हरिरितरत्र न गीयते ह्यभीक्ष्णम्॥
इह तु पुनर्भगवानशेषमूर्त्तिः।
परिपठितोऽनुपदं कथाप्रसङ्गैः"

इस प्रमाण से श्रीभागवत में प्रतिपद श्रीहरि चरित रूप-परमहंसों का भोग्य है। इसी कारण से इस भागवत पुराण को पारमहंस्य संहिता कहते हैं। क्योंकि यह वैष्णवों का

ही धन है अर्थात् परमहंसों का ही धन है, और इसमें केवल एक भागवत परमहंसों का ही ज्ञान गाया गया है तिसी से यह श्रीमद्भागवत पारमहंस्यसंहिता है सो द्वादश [ १३ । १८ ] में तथा माहात्म्य में [ ६ । ८३ ] कहा है कि—

"श्रीमद्भागवतं पुराण (तिलकं) ममलं यद्वैष्णवानां (प्रियं)धनम् ।
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते"

जैसी इस कलियुग में अन्य सर्वाश्रमों की दशा है वह किसी से भी छुपी नहीं है । यद्यपि कलिधर्मप्रकरण में ( भा० द्वा० २ । ४ ) "लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम्" यह कहा है । कि कलि में केवल आश्रम का चिन्ह मात्र रह जायगा वही उस आश्रम की ख्याति में कारण होगा । तथापि दक्षस्मृति ( अ० १ )

"मेखलाजिनदण्डेन ब्रह्मचारी तु लक्ष्यते ।
गृहस्थो देवयज्ञाद्यैर्नखलोम्ना वनाश्रितः ॥
त्रिदण्डेन यतिश्चैव लक्षणानि पृथक् पृथक्"

इस वचन के अनुसार आज कल जैसे किसी भी आश्रमी के चिन्ह मात्र भी प्रायः ठीक २ नहीं देखने में आते हैं । उसी तरह हंसाश्रमी के विषयमें भी कुछ वैकल्य देख पड़े तो आश्चर्य क्या है ? उस के वास्ते पराशर स्मृति ( अ० १ ) में कह दिया है, कि-"युगे युगे च ये धर्मास्तत्र तत्र च ये द्विजाः । तेषां निन्दा न कर्त्तव्या युगरूपा हि ते द्विजाः" इस वास्ते विवेकी जनों को चाहिये कि काल की गति देख कर किसी भी आश्रम की निन्दा न करें ।

इति ।

श्रीवाधूलकुलकमलदिवाकरश्री १०८ गोवर्द्धनरङ्गाचार्यस्वामि-
चरणनलिनचञ्चरीक-श्रीमदयोध्याकनकमण्डपोत्तर-
द्वारनिवासनिरत-शाण्डिल्यवंशावतंस
श्रीवलरामस्वामिसङ्गृहीतो

हंसाश्रमनिर्णयः समाप्तः ॥ श्रीः ॥

# निवेदन

सम्वत् १९६७ में प्रयागीय बाघंबरी गिरिजीने जिसे काशी में छपाया यह उसी श्रीवैष्णवमतप्रदीप का खंडन है। पहली वार यह भी सं० १९१० में काशी में छप चुका है। वैष्णवमतप्रदीप चक्रपाणि के मित्र काशीस्थ एक पंडित का बनाया है। वह भी पहिले छप चुका है। जिसकी प्रति अभी वृन्दावन में श्रीराधारमण के मन्दिर में मौजूद है। पर बाबाजी ने विचारा कि जब तक मेरी बनाई संस्कृत की कोई पुस्तक न छपेगी तब तक पंडिताई में मेरी प्रतिष्ठा दुर्लभ है। हाय प्रतिष्ठा! यह नहीं समुझे कि प्रतिष्ठा शौकरी विष्ठा है, बस प्रतिष्ठा के लिये उसी पुस्तक कोअपने नाम से छपा डाली। गिरिजी ने तो रोजे वाले उस मुसलमान का किस्सा किया, कि—'मैं जो करता हूं उसे खुदा भी नहीं जानता; गले में मछली अटकने पर बात खुली कि वह गोता लगाकर पानी पीलेता था। श्रीवैष्णव महा सभा से अटकने पर गिरिजी की भी कलई खुली। कहिये दूसरे की बनाई पुस्तक को अपने नाम से छपाना साबित होने पर भी क्या पुरुष राजकीय दंड का पात्र नहीं है? क्या चोर को दंड मिलने से ही चोर कहाता है चोरी करने से ही नहीं? क्या इतनी धूर्त्तता का कृत्य भी बाघंबरी गद्दी के महंतराज को कलंकित नहीं करता? पाठक वृन्द! जड तो इस तूमाल की यहां से है। फिर आपने उसी पुस्तिका का भाषा में सत्यानाश किया। जिस की समीक्षा वृन्दावनस्थ स्वामी श्रीभागवताचार्यजी ने ऋजु शब्दों में की है। गिरिजी ने सभा को समक्ष न होने के निमित्त कोलाहल भी किया, और उसकी पूर्त्तिमें समीक्षा का दुरवलोकन करके भी चन्द्रशेखर के नाम मढा, लेकिन समीक्षा में दिये हुए एक दोष का भी उद्धार नहीं हो सका—समवलोकन में भी इतना आन्ध्य? हम जानते हैं, कि-यदि 'उघरहिं अंत न होहि निबाहू' यह तुलसीप्रसाद गिरिबाबा को मिला होता तो, कभी भी इस कटीले रास्ते भूल न खाते। कदाचित् जान बूझ कर ऊवट चल धरे हों, तो

ईश्वर ने 'किमु यत्र चतुरयम्' में तीन की डिग्री और चौथे का कोठा आप ही को बताया समझो। परंच याद रहे कि समीक्षा में जो श्रीभागवताचार्यस्वामी ने कहा है यह उसी सर्वेश्वर की माया का नाट्य है, कि-जिसने परमहंस परिव्राजकाचार्य बाघंबरी बाबा से भी एता अजित तथा तुच्छ कर्म करवा डाला, ख्याल रक्खो इसी का नाम माया का पीसना है कलई खुलने पर अब क्या बाघंबरी बाबा को रात में नींद आसकी है ? 'जन्मान्तिरस्य चाकीर्तिर्मरणादतिरिच्यते' क्या होय-प्रायः ऐसी भूल नूतनावस्था में होती हैं। तथापि बाबा जी को तो लज्जित न होना चाहिये, क्योंकि वैष्णवी मोहिनी माया की लपेट में आकर भी आदि बाघंबरी बाबा भोलानाथ भी लज्जित नहीं हुए। तब तो स्कं० ८ अ० १२ में कहा है कि (तमविक्लवमव्रीडमालक्ष्य मधुसूदनः) भगवान् ने शंकर को लज्जा रहित देख कर वरदान दिया। कि-(सेयं गुणमयी माया न त्वामभिभविष्यति) यह गुणमयी माया अब तुम्हें न सतावेगी। इसी तरह हम भी कृपा कर इनको यह अभय देते हैं कि-गिरिबाबा के पुरीपने की गुरुकुल वंशावली का अब हम उद्घाटन न करेंगे। क्योंकि प्रतिष्ठित पुरुष की ज्यादे अपकीर्त्ति से हमारा भी तो अन्तरात्मा दुःखी होता है। मायावादी लोग तो आस्तिक कहलाते हैं, परंच खुले नास्तिक लोग भी हमारे अनुग्रह छोड निग्रह पात्र नहीं हो सके हैं। सो कहा भी है श्रीउदयनाचार्य ने कुसुमाञ्जलि में---

"इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते।
येषां नास्पदमादधाति हृदये ते शैलसारा नराः॥
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः।
काले कारुणिक! त्वयैव कृपया ते तारणीया नराः"

इसी प्रकार हम भी सबों के श्रेय के अर्थ सर्वेश्वर से पारस्परिक सौहार्द की भिक्षा मांगते हैं कि-हे श्रियः पते! आप सबों को सौहार्द दीजिये।

आप सबों का सच्चाहितैषी वैद्य श्रीनिवासाचार्य---शास्त्री।

अलवर-रामगढ़

